## जीर्णभोजिनं व्याधिर्नोपसर्पति ॥ ६ ॥

भक्ष्यमदनीयं भोज्यद्रव्यं वेत्ति। अशनयोग्यं यद् द्रव्यं तदपि अपथ्यं मन: शरीरप्रतिकूलं भवेत्तदा हितजनकत्व बुद्ध्या नाश्नीयान्नैवाद्यात्। पथोऽनपेतं पथ्यम्। न पथ्यमपथ्यमशनाऽयोग्यमिति। 'धर्मपथ्यर्थन्यायादनपेते' इत्यनेन यता सिद्धम्। अशभोजने, अश्नातेर्विधिलिङ्। अन्यच्च 'अजीर्णेऽभोजनं पथ्यं जीर्णेऽपथ्यं हरितकी'। अजीर्णे अपरिपक्वे भुक्तद्रव्ये अभोजनं पथ्यम्। भुक्तद्रव्ये जीर्णे सति हरितकी अपथ्यम्। तथा विरुद्धभोजनं न कार्यम्। मांसेन दुग्धम्। दुग्धेन लवणम्। तेन सहाम्लञ्च। तथा भुक्तस्योपरि भोजनम्। अन्यच्चिकित्साशास्त्रेऽनुसन्धेयम् ॥ ८ ॥

परिपक्वभोजिनं प्रशंसन्नाह जीर्णेति। पूर्वभुक्तद्रव्ये जीर्णे परिपाकं गते क्षुदुद्रेके च यो भुङ्क्ते स जीर्णभोजी। तं पुरुषं व्याधिरामय: नोपसर्पति नाक्रामति। तदुक्तं वैद्यके—

'जीर्णे तु भोजनं कुर्यान्नाजीर्णे तु कथञ्चन।

अपक्वभोजिनं व्याधि: समाक्रमति निश्चितम्'।

एवं चरक-सुश्रुत-भावप्रकाशाद्यनुसारेण ऋतूक्तनियमेन च भोजनं कुर्यात्। 'जीर्णं परिपक्वपुराणयो:' इति मेदिनी। जृष् वयोहानौ, जरणम्। 'स्त्र्यादिभ्य: क्तिच्चिष्ठावद्वाच्य.' इति वार्त्तिकात् क्तिन्, 'रदाभ्या'मित्यादिना नत्वम्। यद्वा जीर्यतेर्धातो: 'गत्यर्था' इत्यादिना क्तप्रत्यय:। व्याधिं, विविधा आधयो-

## अजीर्णे भोजनं विषम् ॥ १० ॥

ऽप्यात् । व्याधानं व्याधिः । वि, आङ्पूर्व्वाद् दधातेरुपसर्गे 'घोः किः' । एवंविधमशनं परिहरेत् । तद्यथा 'बहुस्तोकमकाले वा ज्ञेयन्तद्विषमाशनम्' । अकाले भोजनन्त्यजेत् । तथा च—

"अप्राप्तकाले भुञ्जानोऽप्यसमर्थतनुर्नरः ।
तां स्तान् व्याधीनवाप्नोति मरणञ्चाधिगच्छति" ॥

अप्राप्तकालः कालादतिमात्रं । भुञ्जानोऽसमर्थे शरीरे भवति । तथा सति तां स्तान् व्याधीन् शिरोव्यथादीन् प्राप्नोति । रोगाधिक्ये मरणमपि प्राप्नोतीति ॥ ८ ॥

भुक्तापाके भोजननिषेधमाह अजीर्णेति । अजीर्णे भुक्तद्रव्यस्यापरिपाके सति यत् पुनर्भोजनन्तद्विषं विषमिव विषं गरलं स्यात् । तद् रोगद्वारा प्राणहारकं भवति । एतच्च लघुचाणक्ये उक्तम्—

"दूरयोता विषं विद्या अजीर्णे भोजनं विषम् ।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम्" ॥

एवं पानीयसन्निधेऽपि 'अजीर्णेऽभोजनं वारि जीर्णे वारि बलप्रदम्' । अभोजनमपेयमित्यर्थः । क्वचिदादर्शे सूत्रान्ते विषमित्यत्र दुःखमिति पाठे तद्दुःखजनकमित्यर्थः । काले च तद् भोजनं नाकाले । तथा च—

"सुखं भवति पक्वेषु रसदोषमन्वेषु च ।
काले वा यदि वाऽकाले सोऽप्रकाल उदाहृतः" ॥

## शरीरे वर्द्धमानो व्याधिर्नोपेक्षेत ॥ ११ ॥

---

रसादीनां पाकं प्रासुमाह—

"उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः ।
लघुता क्षुत्पिपासा च यदा कालः स भोजने" ॥

जीर्णे सत्ये पुनर्भोजनस्य फलमाह—

"आहारः प्रीणनः सद्यो बलकृद्देहधारणः ।
स्मृत्यायुःशक्तिवर्णौजःसत्त्वशोभाविवर्द्धनः ।
यथोक्तगुणसम्पन्नमुपसेवेत भोजनम्" ॥ इति वैद्यके ।

'क्ष्वेडस्तु गरलं विषम्' इत्यमरः । वेवेष्टि कायम् । विषु व्याप्तौ, विष प्रयोगे वा । 'इगुपध' इत्यादिना कः ॥ १० ॥

शरीरे समुत्पन्नस्य व्याधेरुपेक्षाकरणे निषेधमाह शरीर इति । शरीरे देहे सति चेति । वर्द्धमानो वृद्धिं प्राप्तः । समुत्पन्नव्याधिरिति । व्याधिर्धातुवैषम्यजनितावस्था । नोपेक्षेत । नालस्यादवहेलया वा तुच्छीक्रियेत । व्याधेः शरीरहानिकरत्वं वैद्यके उक्तम्—

'धर्मार्थकाममोक्षाणामारोग्यमुत्तमं बलम् ।
रोगास्तस्यापहर्त्तारः श्रेयसो जीवितस्य च" ॥

शीर्य्यते रोगादिना इति शरीरम् । अतो योगेनौषधादिना च व्याधेरुपशमः कर्त्तव्यः । यतो 'व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः' इति कथमर्थ्यमौषधमुक्तम् । 'रोगव्याधिगदामयाः' इत्यमरः । व्याधेरुपशमोपायः सम्यगुक्तो वैद्यके । 'जीर्णशरीरे

शत्रोरपि विशिष्यते व्याधिः ॥ १२ ॥

दानं निधानमनुगामि ॥ १३ ॥

---

वर्धमानं व्याधिम्' इति पाठान्तरत्वे जीर्णं वार्धके प्रथमत्वे देहे इति। सर्वथा व्याधेः परिहार्यत्वे जीर्णं इति विशेषणं स्वरूपव्यञ्जकम्, यद्वाऽत्यन्तापरिहार्यत्वम्। शॄ हिंसायाम्, शृणाति, शीर्यते वा। 'कॄ गॄ पॄ क्तिः' इत्यौणादिकादीरण्। वर्धमानः। वृधु वर्धने, वर्धते। 'वर्धस्कोदन पूरणार्थो'रिति चानश्॥ ११॥

व्याधेरपरिहार्यत्वे विशेषमाह शत्रोरिति। शत्रो रिपोरपि व्याधिः रोगो गद इति। विशिष्यतेऽधिको भवति। शत्रुभिर्बहिःस्थितैर्विपादि धनादेरपहरणं सेवादिप्रहरणञ्च क्रियते। व्याधिस्तु देहस्थो प्राण-देह-धनादेः संहारक इत्यस्य वैशिष्ट्यम्। 'मृतकल्पा हि रोगिणः' इति तदीय शास्त्रोतानुक्रमम्। व्याधिर्वायवादेः स्थानादिना वैषम्यनिमित्तम्। 'न च व्याधिसमो रिपुः' इति लघुचाणक्ये च। हितमितपथ्यभोजनं योग्यकाले स्नानं पानम्, ऐन्द्रियिकं धैर्यञ्च स्वास्थ्यहेतुः। प्राड् निकमः शत्रुरिति। व्याधानं व्याधिः। विविधा आधयोऽस्मादृ वा, व्याङ्पूर्वाद्धाञो 'उपसर्गे घोः किः' इत्यनेन सिद्धः॥ १२॥

धनवितरणं कीदृशं स्यात्तदाह दानमिति। दानं स्वीयद्रव्यस्य दयया धर्मबुद्ध्या वा योग्यपात्रे सम्यक्त्यागः। तन्निधानस्य दानरूपस्य धनस्य निधिर्वानुगामि अनुयायि स्यात्। स्थित-

## पटुतरे तृष्णापरे सुलभमतिसन्धानम् ॥ १४ ॥

विभवानुसारेण भवतीति । यद्वा निधानं धनाधारः । तथा च 'निधानं भूगतं सद्यः सर्वं समधिगच्छति' इत्यागमः । भागवते च 'एतेषानाघसारथ्यां निधानं बीजमव्ययम्' इति । दानं छिन्नकरमपि वित्तानुसारेण कर्त्तव्यम् । नाधिकं न वा स्वल्पम् । 'दानं गजमदे त्यागे पालनच्छेदशुद्धिषु' इति विश्वः । अन्ये तु 'निधानं निधनं कुलं'मित्याहुः । 'निधनं स्यात् कुले नाशे' इति मेदिनी । निधीयते इति नि-पूर्वाद्धधातोर्ल्युट् ॥ १२ ॥

यस्मिन् जने कार्य्यातिसन्धानस्य सौकर्य्यन्तदाह पटुरिति । पटुतरे नानाकार्य्यनिपुणतरे विदुषि, तृष्णापरे लोभपरायणे ऽर्थगृध्नौ जने कार्य्याणामतिसन्धानमनायासेन कार्य्यसाधनच्छिद्रं तत्सिद्ध्यर्थमन्वेषणं वा सुलभमक्लेशकरमिति । पटुतरः विशेषपटुर्दक्ष. । ईदृशं जनं कार्य्यसहायत्वेनानुसन्दध्यात् । सहायवान् नृपः प्रबलः सहायहीनो विपन्नः । तथा चाह मार्कण्डेय—

'मदहीनो यथा नागो दंष्ट्राहीनो यथोरगः ।
असहायस्तथा राजा तत्कार्य्यं वहवश्च वै' ॥

'पटुर्दक्षे ■ नीरोगे चतुरेऽप्यभिधेयवत्, इति मेदिनी । पट गतौ, पटति । 'फलिपाटि' इत्याद्यौणादिकादुः । पटिरादेशश्चेति केचित् । ञि तृष् पिपासायाम्, वर्षणम् । 'तृषि शुषिरसिभ्यः कित्' इति न प्रत्ययः' स्त्रियां टाप् । 'सन्धानमभिषवे

**तृष्णया मतिश्छाद्यते ॥ १५ ॥**

**कार्य्यबहुत्वे बहुफलमायतिकं वा कुर्य्यात् ॥१६॥**

---

चेष्टा संघट्टनयोरपि' इति विश्वः । मन्थोयते इति । डुधाञ् धातोः भावे करणे च ल्युट् ॥ १४ ॥

विषय-लोलुपस्य बुद्धिमान्द्यमाह तृष्णयेति । तृष्णया विषयाभिकाङ्क्षयाभिलाषाधिक्येन च मतिर्बुद्धिर्हिताहित विवेकज्ञानं वा । छाद्यते आव्रियते पिधीयते च । तदुक्तं पूर्वसूरिभिः—

'लोभेन बुद्धिश्चलति लोभो जनयते तृषा ।
तृषार्त्तो दुःखमाप्नोति परत्रेह च मानवः' ॥

अपरञ्च 'का तृष्णा चेत् परित्यक्ता को दरिद्रः क ईश्वरः' । परमत्रैतद् बोध्यं लोके सदाशा अभ्युन्नताशा परहिताशाश्च चेष्टया सह नियतं हितकारिण्यः स्युः । 'तर्षे स्पृहा पिपासे द्वे' इत्यमरः । 'पिपासागर्द्धाभिकाङ्क्षातृष्णाशा'इति च । ञितृष् पिपासायाम्, तर्षणम् । 'तृषिशुषिरसिभ्यः कित्' इत्यौणादिकानः । मननमिति, मन्यते अनयेति मतिः । मन्यतेः क्तिन् ॥ १५ ॥

कार्य्याणामनेकत्वे अधिकफलस्य कार्य्यस्य तेषां मध्ये प्रागनुष्ठानमुचितमाह कार्य्येति । कार्य्यस्य कर्म्मणः । बहुत्वे प्राचुर्य्ये युगपत् समुपस्थितेषु कर्म्मसु मध्ये यस्य कर्म्मणः फलम् आयतिकमुत्तरकालिकं बहुफलं स्यात्तदेव कार्य्य-

## आयसैरायसश्छेद्यः ॥ २१ ॥

## नास्त्यधीमतः सखा ॥ २२ ॥

---

मूर्खवैधेयबालिशाः' इत्यमरः। मुह वैचित्त्ये, मुह्यति। 'मुहेः खो मूर् च' इत्यौणादिकात् सिद्धम्। प्रागुक्तमन्यत् ॥२०॥

कठिनकार्यसाधने सुदृढविषयमेवाश्रयेत् तदिमाह आयसैरिति। आयसैर्लौहैरयस्कान्तादिनिर्मितक्रकचैश्च लोहश्छेद्यो द्विधाकरणीयः। न तु काष्ठादिना लोहश्छेदनीयः। तत्र तद्योग्यताविरहात्। 'आयासैरायसं छेद्यम्'। इति पाठे तु आयासैरधिकश्रमैरायसं छेदनीयम्। यथा 'कण्टके न तु कण्टकम्' इति। न तत्र हेलया श्रमेण विना वा स्वाभाविककाठिन्याल्लोहश्छेदनीयः। सूक्ष्मस्थूलकार्यसाधने सूक्ष्मस्थूलोपायौ युक्तौ। 'लोहो ना शस्त्रके लोहं जोङ्गके सर्वतैजसे' इति मेदिनी। 'कालायसमयस्सो ऽश्मसारः' इत्यमरोऽपि। आयस इति। एति, अयते वेति एतेरसुन्। यद्वा अय एवायसः स्वार्थेऽण्। कालायस इत्यत्र तु 'अनोऽश्माय. सरसाम्' इत्यनेन टच्। सूत्रमदः पूर्वसूत्रोदाहरणभूतमिति केचित्। २१ ॥

दुर्बोधस्य हीनमतेर्मित्राभावमाह नेति। अधीमतो बुद्धिहीनस्य निर्बोधस्य। सखा सुहृद् बन्धुर्वेति। नास्ति नैव विद्यते। धीमतः सुधियः सर्व एव लोका नैपुण्यान्मित्राणि भवन्तीति भावः। तथा च 'कृत्स्नो हि लोको बुद्धिमतामाचार्यः'। सुहृदर्थेति माघ.। 'वाग्मिनो हि जगद्वशमानयन्ति' इति हर्-

## धर्मेण धार्य्यते लोकः ॥ २३ ॥

दारस्वकभाष्ये। अधीमन्तः स्वयं क्लिश्नन्ति परानपि तापयन्ति। अतस्तेषां कुतः सखित्वम्। 'नास्ति धर्मसमः सखा' इत्येवं पाठे तु धर्म-समो धर्मसदृशः सखा सुहृन्नास्तीत्ययमर्थः। तदुक्तं मानवे—

"एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति"॥

अपरञ्च 'धर्मः सखा परमको परलोक याने'। 'धर्मान्न प्रमदितव्यम्'। 'धर्मेण पापमपनुदति' इति श्रुतिः। 'धर्मेण गमनमूर्ध्व'मिति कापिलाः। महाभारते 'धारणाद्धर्म इत्याहु-र्लोकचरितं चरेदि'ति च। धारणादिति। जगतो विधारणात् लोकस्थितिहेतुर्धर्मः। लोकचरितं लोकानां मान्यानां यद् यथेष्टाचरणन्तदनुतिष्ठेत्। 'धीमान् पण्डिते च हृन्मतौ'। धीर्ध्यानं, ध्यायति अनया, ध्यायतेः सम्प्रसारणञ्चेति वार्त्तिकात् क्विप्। 'हलः' इति दीर्घः। धीरस्यास्तीति मतुप्। धर्मः। धरति विश्वं ध्रियते च लोकैरिति धर्मः। धृञ् धारणे इत्यस्मा-'दर्त्तिस्तुसु' इत्यादिना मन्। सखेति। समानः ख्यायते लोकैः 'समाने ख्यः सचोदात्तः' इत्यौणादिकादिन्। सडित्, टिलोपः। 'लो य्यो यलोपः' इत्यतोऽनुवर्त्तनाद् यलोपः। समानस्य सभावः॥ २२॥

धर्मद्वारा भुवनधारकत्वमाह धर्मेणेति। लोको भुवनं

## प्रेतमपि धर्म्माधर्म्मावनुगच्छतः ॥ २४ ॥

---

लोकमिदमवस्थेति । धर्म्मेण विश्वधारकेन धार्य्यते धारणं क्रियते । तथा च श्रुतिः 'धर्म्मो विश्वस्य जगतः प्रतिष्ठा' इति । अन्यच्च स्मृतौ 'धर्म्मो धरा धारकः' इति । धर्म्माभावे तु लोकस्थित्यभावात् सर्व्वोच्छेदप्रसङ्गः ।

'स धर्म्मो द्विविधः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्चे'ति श्रीभगवच्छाङ्करभाष्ये । शान्तिपर्व्वणि च

'प्रवृत्तिलक्षणो धर्म्मः निवृत्तौ च व्यवस्थितः' ।

यद्यपि निवृत्तिलक्षणधर्म्मान्निर्व्वाणमिस्तथापि तयोर्मध्ये प्रवृत्तिलक्षधर्म्मस्य प्राथम्यं प्रवृत्तिपूर्व्वकत्वान्निवृत्तेः । अत्र नीतौ च प्रवृत्तिधर्म्मस्याभिमतत्वं मनुपयोगित्वञ्चेति ।

"धर्म्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ" ।

इति मेदिनी । प्रसङ्गादुच्यते पद्यः । प्रागुक्तमन्यत् ॥ २३ ॥

नापि जीवितान् प्रत्येव नियतं धर्म्मस्यानुसरणमपि तु प्रेतं प्रत्यपि तदाह प्रेतमिति । प्रेतं मृतात्मानं लोकान्तरमाप्तं तमनु पश्चात् धर्म्माधर्म्मौ पुण्यपापफले गच्छतः अनुसरतः । न केवलं जीवितान् प्रति । तदुक्तं महर्षिमनुना—

"मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्म्मस्तमनुगच्छति" ॥

न्यायसमये तु धर्म्माधर्म्मयोरदृष्टरूपेणात्मसमवेतत्वात् किमिह काले परलोकेऽपि तौ चात्मानमनुगमिष्यतः । यथाहि—'यतो-

## दया धर्मस्य जन्मभूमिः ॥ २५ ॥

ऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इति काणादाः। 'चोदनालक्षणोऽर्थो धर्मः' इति जैमिनीयाः। 'दशलक्षणको धर्मः' इति मानवाः। 'वेद प्रणिहितो धर्मः' इति पौराणिकाः। तद्विरुद्धश्चाधर्मः। स ऐहिकदुःखदायकः पारत्रिकनिर्वाणविघातकः। बौद्धार्हतादीनामपि ब्रह्मचर्य्याहिंसा वैराग्यकरुणामैत्र्यादिरूपो धर्मोऽस्ति। 'मैत्री भूतान्तरे पुंसि गुणी व्याहार्य्यमित्रकः' इति मेदिनी। प्रेतः प्रकर्षेणेतः लोकान्तरं गतः। इण गतौ, इति। ततः कप्रत्ययेन सिद्धम्। पूर्ववदुक्तमन्यत् ॥ २४ ॥

धर्मस्येह परलोककार्य्यसाधकत्वमुक्त्वा सम्प्रति तस्य दयाकारणत्वमाह दयेति। दयानुकम्पा परदुःखप्रहाणेच्छेति यावत्। धर्मस्याभ्युदयनिःश्रेयससिद्धिहेतोर्जन्मभूमिः। कर्मणः समुत्पत्तेर्भूमिराकरः। दयाया अभावे धर्माभावः। तदभावे च चित्तप्रसादनस्याप्यभावः। मैत्री करुणा मुदितादीनां सर्वधर्मेषु चित्तप्रसादनकारणत्वात्। चित्तप्रसादनस्य दया समाधिर्भवति। अतः सा प्रभवभूमिर्धर्मस्य। तथा च बृहस्पतिः—

"परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा।
आत्मवद्वर्त्तितव्यं हि दयैषा परिकीर्त्तिता" ॥

'दयाभूतहितैषित्वम्' इति गोविन्दभट्टः। स्मृतौ च—

"कृपा दयानुकम्पा च करुणानुग्रहस्तथा।
हितेच्छा दुःखहानेच्छा सा दया कथ्यते बुधैः" ॥

धर्ममूले सत्यदाने ॥ २६ ॥
धर्मेण जयति लोकान् ॥ २७ ॥

---

दयदानगतिहिंसा रक्षणेषु। दयते, रक्षति अनया। ततो भिदादित्वादङ्, स्त्रियामाप् च ॥ २५ ॥

सत्यदानयोर्द्वयोर्धर्ममूलत्वमाह धर्मेति। सत्यन्तथ्यं यथा सदनुबोधकम्। दानं धर्महितबुद्ध्या स्वद्रव्यस्य सत्पात्रे समर्पणम्। एते द्वे धर्ममूले स्तः। धर्मो मूलं ययोः सत्यदानयोस्ते। सत्यन्दानञ्च धर्मप्रकृतिके भवतः। तद्धेते तद्विरुद्धे भविष्यतः। अन्यच्च मानवोक्त-दशलक्षणात्मकधर्मे च सत्यस्यान्तर्गतत्वात्। अपरञ्चोक्तं स्मृतौ—

'इज्याऽध्ययनदानानि धृतिः सत्यं तपः क्षमा।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः' ॥

छान्दोग्यश्रुतौ च 'त्रयोधर्मस्कन्धा यज्ञोऽध्ययनन्दानञ्चे'ति।

'सत्यं शपथे च शपथे तथ्ये च त्रिषु तद्वति'। इति कोषः सति परमेश्वरेऽयं साधुरिति सत्यम्। 'तत्र साधु'रिति यत्। दाञ् दाने, ददातेर्ल्युट् ॥ २६ ॥

धर्मस्य लोकजये श्रैष्ठ्यमाह धर्मेणेति। धर्मेण सदनुष्ठानेन तत्प्रचारेण च सर्वान् लोकान् जयति। लोकेषु धार्मिकः श्रेष्ठः कीर्त्तिमान् भवति।

## मृत्युरपि धार्म्मिकं रक्षति ॥ २८ ॥

## धर्म्माद्विपरीतः पापः ॥ २९ ॥

तदुक्तम् ईश्वरकृष्णेन "धर्मेण गमनमूर्द्ध्वं गमनमधस्ताद्भवत्यधर्मेण" इति। धार्मिकान् धीमतोजनान् सर्व्वे विश्वसन्ति, आद्रियन्ते च। धर्मेण लोकमिमं विजित्य ऊर्द्ध्वं द्युप्रभृतिषु लोकेषु गच्छन्ति। अधर्म्मेण नरकादिषु अधोगतिः लोकेष्वयशश्च। 'लोकोविश्वे जने' इति हैमः। लोक्र दर्शने, लोक्यते इति लोकः। यथा सिद्धः॥ २७॥

धार्मिकस्य मृत्युतोऽपि रक्षामाह मृत्युरिति। मृत्युर्मरणम् निधनमिति। यमोवा। धर्म्मिष्ठं धार्म्मिकं जनं रक्षति पालयति। यमोऽपि धार्म्मिकं नेतुं न शक्नोति। धर्म्मबलेन निर्द्दिष्टमृत्युकालमतीत्य दीर्घायुर्भवति। स्वर्गमपि गच्छति। अत्युत्कटतपोबलेनामर इव भवति। यथा मार्कण्डेयादिः। 'मृत्युर्ना मरणे यमे' इति मेदिनी। मृत्युर्भौतिकदेहात् प्राणिनां प्राणवायोः सम्यग् बहिर्गमनविशेषः। मृत्युरिति। मृङ् प्राणत्यागे, म्रियते। 'भुजिमृङ्भ्यां युक्त्युकौ' इत्यौणादिकसूत्रेण त्युक्॥ २८॥

पापस्य धर्म्मवैपरीत्यमाह धर्मादिति। धर्मात् सुकृतेः पुण्यादेरिति। पापः दुरितं कल्मषं दुष्कृतिश्च। विपरीतो भिन्नः कार्य्ये सम्फलयोः प्रभेदात् पृथगिति। पापेनाधोगतिश्च। अतः पापं हित्वा धर्माचरणं विधेयम्। 'नित्यनैमित्तिकैरेव कुर्व्वाणो-

**यत्र यत्र प्रसज्यते तत्र तत्र ध्रुवा स्मृतिः ॥३०॥**

दुरितचय'मिति। धर्मस्य च पापनाशकत्वम्। तथाच श्रुतिः 'धर्मेण पापमपनुदति'। स्मृतिश्च—'लिप्यते न स पापेन पद्मपत्रमिवाम्भसा'। 'पापं किल्विष कल्मषम्' इत्यमरः। पा पाने, पिबति भक्षयति कर्त्तारम्। इत्यतः 'पानीविषिभ्यः प.'। 'भीमादित्वादपादाने' इति सिद्धम्। अथवा धर्मात्सत्कार्याद्विपरीतः विरुद्धाचरणशीलः। पापः पापीति। कलुषवान् पुरुषः स नियतं धर्मविरुद्धाचरणं करोति। एतस्मिन् पक्षे पापमस्यास्तीति 'अर्श आद्यच्'। अन्यथा पापशब्दस्य स्वतः क्लीवत्वम् ॥ २९ ॥

कार्ये नियुक्तस्य पुंसः स्मृतिर्भवत्यित्याह यत्रेति। यत्र यत्र यस्मिन् यस्मिन् कर्मणि लोकः प्रसज्यते प्रसक्तो निरतस्तत्सत्कार्यसम्पादने समुद्यतो भवति। शुभे कर्मणि पुण्यस्मृतिः। अशुभे कर्मणि अकीर्त्तिस्मृतिश्च। तत्र तत्र कर्मणि ध्रुवा नियता चिरस्थायिनी स्मृतिः कार्यसम्पादन नैपुण्याद्भवति। तत्रैव कर्मणि निरतः स्वाधेन लोकोपकृतिः प्राशस्त्यं स्मृतिश्च स्यात्। अथवा अनुष्ठितेषु कर्मसु ध्रुवा भ्रमशून्या स्मृतिरावश्यकीति। यतः स्मृतिभ्रंशात् कार्यनाशो बुद्धिनाशश्च भवति। स्मृतेः संस्कारमात्रजन्यत्वात् कार्यसंस्कारः प्रयोजनम्। यद्वा स्मृतिः स्मारकमित्यर्थः।

'स्थिते नित्ये निश्चिते च ध्रुवं खेऽजस्र तर्कयोः'।

इति हैममेदिन्यौ। ध्रु स्थैर्य्ये, ध्रुव गतौ वा, ध्रुवति। 'इगुपध' इत्यादिना कः। यद्वा कूटादित्वात् ङित्वम्। उवङ्

## महती प्रसज्येत ॥ २१ ॥
## लोके प्रशस्तः स मतिमान् ॥ २२ ॥

---

च। 'ध्रुवा रतिः' एवं पाठे तु रतिः प्रत्यासक्तिरित्यर्थः। केचित्तु सूत्रद्वयमेकीकृत्यान्यथा पाठरीतिमङ्गीकुर्व्वन्ति। तथा च 'धर्माद्विपरीतं पापं यत्र यत्र प्रसज्यते तत्र धर्मावनतिर्महती प्रसज्यते'। इत्थं पाठे सूत्रार्थः सुगमः ॥ २० ॥

धर्मस्य महतीमवमानामाह महतीति। महती श्रेष्ठा प्रसक्तिरिति। यत्र धर्मविरुद्धं पापं प्रसक्तं तत्र धर्मस्यावमानना धर्महानिर्वा प्राधान्येन प्रसज्येत प्रसक्ता भवति। अतः पापप्रसक्तिर्यथा न भवेत्तथा यतितव्यम्। अन्यथा महादुरितपङ्के मनुजकुञ्जरो निमज्जत्येव। 'बृहद्विशालं पृथुलं महत्' इत्यमरः। मह पूजायाम्। 'वर्त्तमाने पृषद् महत्' इत्यौणादिकात् साधुः ॥ २१ ॥

लोके मतिमतां श्रेष्ठत्वमाह लोके इति। लोके भुवने जनसमूहे। यः प्रशस्तः कर्मदक्षो महामतिः सः पुमान् धीमान् इति। सर्व्वत्र मतिमत्त्वं हि प्राधान्ये कारणम्। यतः 'भूतानां प्राणिनः श्रेष्ठा प्राणिनां बुद्धिजीविनः' इति विद्वन्मतम्। श्रेष्ठा इत्यर्थः। अन्यत्रोक्तं नीतिनिपुणैः 'बुद्धिर्यस्य गरीयसी स बलवान् स्थलेषु कः प्रत्ययः'। 'शस्तं क्षेमे प्रशस्ते च' इति हैमः। प्रकृष्टं शस्तः। शंस स्तुतौ, प्रपूर्वात्ततः क्तः। मतिमान्, मतिर्बुद्धिर्विद्यतेऽस्येति मतुप् ॥ २२ ॥

सज्जन-गर्हिते न प्रसज्येत ॥ ३३ ॥

उपस्थित-विनाशः प्रकृत्याकारेण कार्य्येण लक्ष्यते ॥ ३४ ॥

---

साधुजननिन्दितकार्य्यप्रवर्त्तनमाह सज्जनेति। सज्जनाः साधवः। बहवो विद्वांसो वा। तेषां गर्हिते विगीते निन्दिते वा कर्मणि। पश्यो हितेच्छुर्मानवो न प्रसज्येत। नैव तत्र निरतो भवेत्। तथा च स्मृतौ—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमिच्छति"॥

तत्रैव च, 'अकुर्वन् विहितं कर्म निन्दितञ्च समाचरन्। प्रसज्जे चेन्द्रियार्थेष्विति'। अन्यवर्मशास्त्रे पुष्कलमस्ति। गर्हिताचरणे समाजेषु दुर्नीतिर्वर्द्धते। तद्वर्द्धने ततोपद्रवः स्यात्। सन् शिष्टोजनः सज्जनः। 'सभ्य-सज्जन-साधव.' इत्यमरः॥ ३३॥

वर्त्तमानकार्यस्य भविष्यति हानिर्हेतुमाह उपस्थितेति। उपस्थितानां वर्त्तमानावस्थां प्राप्तानां विषयाणां, यो विनाशः समुच्छेदो हानिः। यद्वा सम्प्रति यो नाश, तस्य प्रकृत्याकारेण विषयस्वरूपेण कार्य्येण तद्व्यापारेण वा लक्ष्यते दृश्यते। वाऽप्यनुमीयते। अत एव वस्तुन. सत्वं धर्महानिश्च कार्य्यं यथा न प्रसरति तथैवावस्थातव्यमिति ,पूर्व्वानुषङ्गः। प्रकृतिराकारः। आकारः समुदाचार-स्वरूपम्। अन्यत् कार्य्यस्य पूर्वचिन्तया-

## आत्म-विनाशं सूचयत्यधर्म-बुद्धिः ॥३५॥

## नास्ति पिशुनवादिनो रहस्यम् ॥ ३६ ॥

---

नागतचिन्तया च सम्प्रति दर्शनेनापि अनुमेयम्। - स्था गति निवृत्तौ, ष्ठीवति। ततः क्त प्रत्ययेन सिद्धम्। नश अदर्शने, विनशनं विनाशस्ततो घञ्। आचरणमाजारः करोतेर्घञ्। प्रज्ञायते समाक्रियते उपस्थाप्यते यया सा प्रज्ञप्तिः तेन स्वरूपमेव प्रज्ञप्तिः ॥ ३४ ॥

अधर्मबुद्धेः स्वस्यापि नाश कारणत्वमाह आत्मेति। आत्मनः स्वस्य वस्तु सत्त्वस्य वा। अधर्मबुद्धिः अधर्मजनकाकार्य्ये मतिः। सा तत्कार्य्यकर्त्तुर्जीवनं समुच्छेदं वा सूचयति प्रकाशयति। यद्वा अधर्मसत्त्वस्य यथार्थ्यितवस्तुनश्च विरोधिनी बुद्धिः। सा निजस्य विनाशं प्रकटयति किमुतान्यस्य। अतोऽधर्मबुद्धिः नाशपरम्पराय भवति। तदुक्तं—

"अधर्मेणैधते राजन् ततो भद्राणि पश्यति।
ततः सपत्नान् जयति समूलस्तु विनश्यति॥"

अन्यत्र लौकिके धर्मबुद्धिपापबुद्धौ कथायां व्यक्तमस्ति। 'विनाशः स्याददर्शनम्' इत्यमरः। नश अदर्शने, विनाशनम्। ततो घञ्। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मति'रित्यमरः। बुध्यते बोधनं वा अनयेति ततः क्तिन् ॥ ३५ ॥

खलप्रकाशितमन्त्रस्य रहस्य स्थाने पाठमनाह नेति। पिशुनवादिनो दुर्जनस्य। 'पिशुनाः खलाः सूचकाः।' त एव वादिनो

## पररहस्यं नैव श्रोतव्यम् ॥ ३७ ॥

वक्तारः । तेषां रहस्यं गोप्यम् । किमपि नास्ति । तेषां तादृश एव स्वभावः, सतत परदोषाविष्कारणे तत्परत्वेन रहस्य विषयज्ञाने ते निपुणा भवन्तीति । बहुधा मन्त्रियापि परदोषमाविष्कर्वन्ति । अतः धूर्त्तानां किमपि गोपनीयं नास्ति । मतिमान् तेषां सविधे रहस्यं नैव प्रकाशयेत् । 'शठः पिशुनो दुर्जनः खलः' इत्यमरः । वद् व्यक्तायां वाचि । वदनम् । ततो घञ् । वादोऽस्यास्तीति वादी तस्य । पिश, अवयवे, पिंशति । 'क्षुधि पिशिमिथिभ्यः कित्' इत्युनन् । नतु वाहुलकादुनन्, औणादिकसूत्र सत्वात् । 'रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्' इति मेदिनी । रहो गोपने भवम् रहस्यम् । 'दिगादिभ्यो यत्' ॥ ३६ ॥

पररहस्य श्रवणे मानस क्रोधाद्युद्रेकात्तन्निषेधमाह परेति । परस्यान्यस्य रहस्यं गोपनीयं वृत्तान्तं नैव श्रोतव्यम् । तादृशरहस्य श्रवणे बुधे हीनता परिवर्द्धते । दुष्प्रवृत्तिरपि विषयविशेषे अपरिहार्य्येति । 'परः श्रेष्ठारि दूरान्योत्तरे क्लीवन्तु केवले' इति मेदिनी । पॄ पालन पूरणयोः । पिपर्त्ति, पूर्य्यते अनेन वा । ततः पचाद्यच् । यद्वा 'ऋदोरप्' । 'पुंसि करणे' घ प्रत्ययश्चेति । रभसोऽपि 'रहो निधुवनेऽपि स्याद्रहो गुह्ये नपुंसकम्' । रह त्यागे, असुन्, तेन रहस । रहो भवं रहस्यम् । दिगादित्वात् यत् ।

वल्लभस्य कातरत्वमधर्मयुक्तम् ॥ ३८ ॥
स्वजनेष्वति कामो न कर्त्तव्यः ॥ ३९ ॥

---

अन्ये तु परस्य गम्यो रहस्यस्य गुह्यं हृद्‌गतमप्रकाश्यं यदादित्याहुः। नीतिविदस्तु अन्यदीय गुह्यविषयमनुमाय प्राक् प्रकाशनं रहस्यभेदमित्यूचुः। ३७।

स्वामिनः कातरत्वस्यानौचित्यप्रख्यापनाय यद् धर्मविरुद्धमाह वल्लभस्येति। वल्लभस्य प्रभोः स्वामिनः गुरोर्वेति। यावत्। तस्य कातरत्वं दैन्यं कार्पण्यञ्चेति। तदधर्मयुक्तम्। अधर्मान्वितम् अयोग्यत्वसूचकत्वात् पापान्वितमिति। यथा क्षत्रियस्य रणभीरुता। यथा च 'धर्म्याद्धि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते' इति गीतायाम्। तथैव च 'क्लैब्यं मास्मगमः पार्थ! नैतत्त्वय्युपपद्यते'। एवञ्चाभ्युदयनिःश्रेयसकार्यसाधने दैन्यं सर्वस्य सर्वथा गर्हितमिति। अपरञ्च यस्तु वल्लभः ■ योग्यकार्य्येषु शक्तिमान् भवेत्, नाप्यशक्तः। तादृक्त्वे कार्य्यहानादधर्म एव स्यात्। 'वल्लभो दयितेऽध्यक्षे सल्लक्षण तुरङ्गमे' इति विश्वः। वल्ल संवरणे, वल्लते। 'रमिवल्लिभ्याञ्च' इत्यौणादिकादभच्। 'अधीरे कातरः' इत्यमरः। दर भयनतरपयोः। ईषद्दरति। ततः तरते रच्। ईषदर्थे ■ कोः कादेशः ॥ ३८ ॥

स्वजनेषु धनातिस्पृहाऽनिष्टजनकत्वेन निषेधमाह स्वजनेष्विति। स्वस्यात्मनो जनाः परिवाराः ज्ञातय इति यावत्।

## मातापि दुष्टा तक्तव्या ॥ ४० ॥

तेषु जनेषु अतिकामो अत्यभिलाषः स्वार्थार्थं न कर्त्तव्यः। मच विधातव्यः। तेन ते विरक्ता द्वेषिणोवा स्युः। द्वेष्टारः सन्तोऽवश्यमनिष्टमाचरन्ति। यत्र स्वार्थाभिलाषाधिक्यं तत्रैव विवाद सम्बन्धच्छेदौ भवतः। 'अतिक्रमः' इति पाठेतु अतिक्रमोलङ्घनं उपात्ययो न कार्य्य इत्यर्थः। 'अतिक्रमोऽत्यये कृच्छ्रेऽत्युत्पाते नागदण्डयोः' इति धरणिः। 'कामः स्मरेच्छयोः पुमान्, इत्यमरः। कमु कान्तौ, काम्यते। यथा सिद्धम्। अरिक्रमणमतिक्रमस्ततोऽतिपूर्व्वात्क्रमेर्घञ्। तथा कमेः स्मरार्थे तु काम्यतेऽनेनेति 'पुंसिसंज्ञायाम्' इति घः॥ ३८॥

'आत्मविनाशहेतुत्वे' मातुरपि त्यागमाह मातेति। माता प्रसूतिः। यद्यपि सा प्रसूविर्दुष्टा आततायिनी समपकारिणी सती। त्यक्तव्या दूरे स्थातव्या। न तु सम्बन्धात् च्युता भवति सम्बन्धस्य ध्रौव्यात्। अत्र त्यागपदेन दूरावस्थितिरेव ज्ञेया। सान्निध्येऽमस्थानेऽपकृति-सम्भवात्। अत्रापिशब्दादन्येषां त्यागे शङ्कावतारोनास्त्येवेति सूचितम्। हिताहितविवेकशून्यस्य गुरोस्त्यागमाह, तथाच 'गुरोरप्रतिपन्नस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते'। एवन्त्यागः स्थानान्निर्व्वासनं वा, न तु दैहिकवधादि। तथा गुरूणा 'वधोनास्तीति दैहिक.' इति महाभारत-निषेधात्। एतत्तु नीतौ। अन्यद्धर्म-विषये ज्ञेयम्।' 'माता गौर्दर्गा जननी मही'ति हैमः। मान

**स्वहस्तोऽपि विषदिग्धश्छेद्यः ॥ ४१ ॥**

**परोऽपि च हितो बन्धुः ॥ ४२ ॥**

---

पूजायाम्, मन्यते। मा माने च, माति गर्भोऽस्यामिति। *'मस् नेष्टृ' इत्यादयोणादिकास्तृचा साधुः ॥ ४० ॥*

विषाक्रान्तस्य स्वहस्तस्य प्राणनाशकरत्वे च्छेदनमाह स्वेति। स्वस्यात्मनः। हस्तः करः पाणिरिति। विषेण गरलेन भुजगदंष्ट्रेन च। यद्वा तादृश भीषण रोगेण। दिग्धः तेन दग्धः विषाक्रान्तः। अनच्छेद्य स्तीक्ष्णास्त्रादिना भेद्यः कर्त्तनीयश्च। 'विषाक्ते दिग्ध लिप्तकौ' इत्यमरः। 'दिग्धो विषाक्तबाणे स्यात् पुंसि लिप्तेऽन्यलिङ्गकः' इति मेदिनी च। 'अङ्गुलीयोरगक्षता' इति कविसमयः। का कथा परहस्तच्छेदे स्वहस्तस्यापि च्छेदः समुचितः। तच्छेदे शरीरप्राणरक्षा सम्भवति। सूत्रमदः पूर्व्वसूत्रस्य दृष्टान्तपरम्। दिह उपचये. दिह्यते। दिहेः क्तः ॥ ४१ ॥

शत्रोरपि हितकारित्वे बन्धुत्वमाह पर इति। परः स्वेतरः शत्रुरनात्मीयः। हितो हितकारो उपकारकः। कार्य्यकालेऽसुहृदपि यः सुहृद्रूपेणोपकरोति सोऽपि च बन्धुर्मित्रम्। तथाचोक्तं राजनीतौ 'परोऽपि हितवान् बन्धुः। बन्धुरप्यहितः परः। अहितो देहजो व्याधिर्हितमारण्यमौषधम्'। एवञ्च सुधीजनः असुहृदपि ग्राह्यः। मूढो दुर्मतिः सुहृदपि

## कक्षादप्यौषधं गृह्यते ॥ ॥ ४३ ॥

ग्रहणीयः । हितः पथ्यम् । हितमुपकृतिरस्यास्तीति अर्श आदित्वादच् । 'बन्धुर्मात्रादबान्धवयोः' इति हैमः । पारिभाषिकबन्धुश्च, —'अत्यागसहनोबन्धुः सदैवानुमतः सुहृत्'इति । दधातेः क्त प्रत्ययः । बन्ध बन्धने, बध्नाति । 'शृस्वृस्निहि' इत्यादौ-णादिकादुः ॥ ४२ ॥

प्रयत्न-साध्यत्वाद् गृहकक्षादपि औषधग्रहणमाह कक्षादिति कक्षादालयाद् गृहप्रकोष्ठादतिसान्निध्यादपि किमु सुदूरादरण्यादेः । औषधं भैषज्यं गृह्यते आक्रियते । 'कक्षादिति' पाठेतु । कक्षात् कर्षात् तृणादपि इत्यर्थो भविष्यति । न तदर्थः परं रुचिकरः । औषधस्य जीवनदायकत्वात् । 'कक्षः कर्पे तृपे चक्रे प्रकटव्यवहारयोः । आलस्ये पामके चार्थ तुल्ये सौव्र्वचलेन्द्रिये' इति विश्वः । एवमेव मेदिनीप्यदाह यथा 'रुद्राक्षैरामयौ सर्पे विभीतकतरावपि । चक्रे कर्पे पुमान् क्लीबं तुल्ये सौवर्चलेन्द्रिये' । 'कक्षः स्मृतो भुजामूले कक्षोऽरण्ये च वीरुधि' । 'कक्षः शुष्कतृणे प्रोक्तः कक्षः कच्छ उदाहृतः । कक्षासर्पापदे काञ्च्यां रथगेह प्रकोष्ठयोः' इति धरणिश्च । कक्षः, कष हिंसायाम्, कषति । 'हसृ वदि हनि कमि कषिभ्यः स' इति सागमः । अक्षू व्याप्तौ, अक्षति । ततः पचाद्यच् । 'अजातौ सर्व्वमौषधं' मित्यमरः । द्रव्यमात्रविवक्षायां औषध

नास्ति चौरेषु विश्वासः ॥ ४४ ॥
अप्रतीकारेषु व्यसनेषु अनादरो न कर्त्तव्यः ॥४५॥

---

गन्धप्रयोगो दृश्यते । ओषधेरिदम् । 'ओषधेरजातौ' इत्यण् । अन्याश्च फलपाकान्ता ओषध्यो भवन्ति । मेध्यक्षि तु षष्टिका घृत-तैलासवारिष्टावलेह-चूर्ण-वटिका प्राश-प्रलेप-पाचनादीनामौषधशब्दवाच्यत्वम् ॥ ४३ ॥

अलभित्ते द्रव्यापहरणस्वाभाव्याच्चौरेषु विश्वासाभावमाह नेति । चौरेषु तस्करस्तेयकारकपाटच्चरेषु विश्वासो निश्चयप्रत्ययः । नास्ति न विद्यते । चौर-दस्यु-दुष्टेषु च क्वचित् विश्वासे महानिष्टं स्यादितिभावः । तेषां स्वाभाव्यानाय विवेकाभावो विश्वासाभावे हेतुः ।

'चौरः पाटच्चरोऽपि स्याच्चौरपुष्पौषधावपि' । इति विश्वः । 'मानसनिश्चय विश्वास-विस्त्रमाः' । 'समौ विस्रम्भविश्वासा'विस्यमरः । 'श्वस् प्राणने' विश्वसनमिति विपूर्वात् श्वसुधातोः घञ् । चुर स्तेये, चोरणम् 'अप्रत्ययात्' संज्ञापूर्व्वकत्वान्न गुणः । चौरेति पाठे पचाद्यचा सिद्धः । चुरा शीलमस्य 'छत्रादिभ्योणः' ॥४४॥

अप्रतीकार्य्यो व्यसनः सोऽस्य इत्यादावप्रतीति । व्यसनेषु विपज्जनकदोषेषु अष्टादशप्रकारेषु च । अप्रतीकारेषु अप्रतिसमाधानेषु वैरनिर्यातनायोग्येषु वा । अनादरोऽश्रद्धा ईर्षः परिभवो वा । न कर्त्तव्यो नैव विधेयः । यद्यपि समुपस्थितेषु व्यसनेषु प्रतीकर्त्तुं न शक्यते तदा तदर्थं समधिकोद्यमः कार्य्यः,

कस्यचिदर्थं स्वमिव मन्यते साधुः ॥५४॥

परविभवेष्वादरो नैव कर्त्तव्यः ॥ ५५ ॥

---

सज्जनस्य स्वार्थपरार्थयोर्व्याघाते तुल्यमतीतिमाह कस्यचिदिति। कस्यचिज्जनस्यार्थं धनम्। साधुः सज्जनो महाजनो महामतिरिति यावत्। स्वमिवात्मन इवेदं परकीयं वस्तु विनश्यतु इत्थं मतिर्माभूत्। यथा स्वार्थहानौ दुःखं तथा परार्थहानावपीतरस्य दुःखं भवेत्। साधूनां विषये इत्थं स्वपरभेदाभावः। तदुक्तम्

"अयं निजःपरोवेति गणना लघुचेतसाम्"।

अपरञ्च "आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः"।

असाधुस्तु स्वस्मात् परकीयद्रव्यं भिन्नं मत्वा तद्धरणव्याघातादौ प्रवृत्तः स्यादिति। 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनी। स्वन शब्दे स्वनति। 'अन्येभ्योऽपि दृश्यते' इति वार्त्तिकात् डः। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति मेदिनी। साध संसिद्धौ, साध्नोति धर्मं हितं वा। 'कृवा वा' इत्यादौणादिकादुण्॥ ५४॥

लोभापहरणादिभयात् परसम्पत्तिषु अत्यादरनिषेधमाह परेति। परेषामन्यजनानां विभवेषु धन-सम्पत्तिषु आदरः आग्रहो लोभो नैव कर्त्तव्यः। यतस्तेष्वत्यादरेण लोभो विवर्द्धितुं शक्यते। तस्मादपहरण-व्याघातेच्छापि सम्भविष्यति तेन पापञ्चेति। परन्तस्य सौहित्यबुद्ध्या समादरकरणे दोषाभावः।

**परविभवेष्वादरो विनाश-मूलम् ॥ ५६ ॥**
**पलालमपि परद्रव्यं न हर्त्तव्यम् ५७ ॥**

---

तदुक्तं लघुचाणक्ये 'परद्रव्येषु लोष्टवत्' इति । मानवनीतौ च 'परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्' इत्यनिष्टजनकत्वमुक्तम् । 'विभवो धननिर्वृत्योः' इति हैमः । विपूर्वाद् भवतेः रचा विभव इति साधुः । 'आदृतौ सादरार्चितौ' इत्यमरः । दृङ् आदरे, आद्रियते । ततोऽप् ॥ ५५ ॥

परद्रव्ये लोभनिषेधमुक्त्वा सम्प्रति तस्य विनाश-पापजनकत्वेन विनाशहेतुत्वं वक्ति परेति । परस्य विभवे धने ऐश्वर्ये वा समादरोऽत्याग्रहः । आत्मनो विनाशस्य मूलं हेतुः । तथा चोक्तं कविना—

"यदस्मदीयं न हि तत् परेषाम्" ।

इति विज्ञाय मतिमान् सुखं तिष्ठेत् । एवं परदारेष्वपि विज्ञेयम् । परदारार्थिनः रावणदुर्योधनकीचका विनष्टाः । शिष्टं प्रागुक्तम् । 'मूलं शिफाद्ययोः' । 'मूलविस्तेऽन्तिके ना भे' इति मेदिनी । मूल प्रतिष्ठायां, मूल रोहणे वा, मूलति । इगुपधत्वात् कः ॥ ५६ ॥

अतिक्षुद्रमपि यत् परद्रव्यं तद्धरणे परानिष्टाभावेऽपि न हर्त्तव्यमित्याह पलालेति । पलालं निष्फलं धान्यं शुष्ककाण्डं

**परद्रव्यापहरणमात्मद्रव्यविनाशहेतुः ॥ ५८ ॥**

**न चौर्य्यात् परं मृत्युपाशः ॥ ५९ ॥**

---

वा । तद्वदसारं परद्रव्यं तुच्छं वस्तु मत्वा न हर्त्तव्यम् । नैवाप-हरणीयम् । ततो यत्किञ्चिदपि परकीयं वस्तु तदननुमत्या न संगृह्णीयादिति भावः । 'द्रव्यं भव्ये धने क्ष्मादौ' इति हैमः । हरिवः, 'द्रव्यञ्च भव्ये' इति साधु । प्रागुक्तमन्यत् । 'पलालो-ऽस्त्री स निष्फलः' इत्यमरः । धान्यरहितकाण्डः पलालम् । पल गतौ, पलति । 'तमिविशिबिडि' इत्यादिना कालन् । यद्वा पलमलति । अल भूषणादौ । तस्मादण् । द्रव्यविशेषणात् क्लीबत्वम् । पुंस्त्वमन्यथा ॥ ५७ ॥

येन मन्दमतिना लोभात् प्रमादाद्वान्य-द्रव्यापहरणं क्रियते तस्यात्मनाशकारणमाह परेति । परेषां गुर्वादीनां शत्रूणां वान्ये-षाञ्च । यद् द्रव्यापहरणं तत् स्तेयकरणम् । तत्कर्त्तुरात्मनः विनाशः प्राणादेः संहारः । तस्य हेतुः कारणम् । यद्वा द्रव्य-स्यान्यस्वामित्वविशिष्टवस्तुनः । यदपहरणन्तद्धात्मनः स्वस्य द्रव्यस्य विनाशस्य । विनाशस्य ध्वंसस्य हेतुः कारणं ज्ञेयमिति । अतो बलात् प्रमादाद्वान्यद्रव्यस्तेयकरणरूपावैधकर्म्म न विधेयम् । 'द्रव्यं स्याद् द्रविणे भव्ये पृथिव्यादौ' इति विश्वः । 'अपहारस्त्वप-चयः' इत्यमरः । अपचयोऽपहरणमत्र ॥ ५८ ॥

चौर्य्यस्य यमपाशतुल्यत्वमाह नेति । चौर्य्यात् स्तेयकरणात् परं श्रेष्ठमधिकमिति । मृत्योर्यमस्य मृतेर्वा पाशः बन्धनरज्जुः

यवागूरपि प्राणधारणं करोति काले ॥ ६० ॥

---

र्नास्ति । यथा हि यमपाशेन निधनसमये तद्भटैः मृतप्राणाः नीयन्ते । तद्वच्चौर्य्यापराधेन राजपुरुषैर्नीयते । परमस्याधिकं यमपाशैर्वारमेकं नीयते चौर्य्यापराधेन प्रतिवारं यदा नेतुं शक्यते । अतोऽस्य श्रेष्ठत्वम् । चौर्य्यापराधे धनोपार्जनिरयंनाशः शारीरिककष्टं कारागृहभोगश्चेति विदितमस्ति सर्वेषाम् । यम-पाशश्च—

"ततः सत्यवतः कायात् पाशबद्धं वशङ्गतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" ॥

इति भारते । काठकश्रुतावपाम् 'स मृत्युपाशात् पुरतः' इति । 'स्तेयं स्तैन्यञ्च चौर्य्यं स्याच्चौरिका चौरिकाऽस्त्रियाम्' इति वाच-स्पतिः । चौर्य्यापराधे दण्डविधिरस्यार्थशास्त्रेऽस्ति । चौरस्य कर्म-चौर्य्यम्, ततः ष्यञ् । मृत्युः । मृङ् प्राणत्यागे, म्रियते । 'भुजि मृङ्भ्यां युक्त्युकौ' इति त्युक् । 'पाशस्तु मृगपक्ष्यादिबन्धने' इति हैमः । पश बन्धे, पाशयते, चुरादौ । ततो घञ् ॥ ५९ ॥

समये अतिक्षुद्रवस्तुनापि जीवनधारणं सम्भवति तदाह यवागूरिति । यवागूर्पिच्छका रोगि-पथ्यविशेषः । सा तु क्षुद्रा अल्पा अपि काले रोगपरीभूत शरीरे अन्नाभावसमये वा । प्राण-धारणं लोकानां जीवनरक्षणं करोति । अतः क्षुद्रोऽपि काले-महोपकारसाधनं विदधाति । तत्र हेयबुद्धिं न कुर्य्यात् । यदा

## न कालेन मृतस्यौषधं प्रयोजनम् ॥ ६१ ॥

लोकानां यवाग्वा प्राणधारणसम्भवे । किमर्थं प्राणविघातक-तुल्यकर्म्मणा चौर्य्येण । तदुक्तं नीतिविद्भिः—

"स्वच्छन्दवनजातेन शाकेनापि प्रपूर्य्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्य्यात् पातकं महत्" ॥

राजवल्लभेऽप्युक्तं—

"यवागूर्ल्वणत्वग्रधाग्नी लघ्वी वस्तिविशोधनी ।
अतिसारे ज्वरे दाहे हिता वह्निप्रदीपनी" ॥

'यवागूरुष्णिका श्राणा विलेपा तरला च सा' इत्यमरः । यु मिश्रणे, यौति, यूयते वा । 'स युवचिभ्योऽन्यूरागूजञ्जु चः' इत्यनेनागूच् ॥ ६० ॥

योग्यकाले मृतस्य मृतेः प्रागौषधसेवन-प्रयोजनाभावमाह नेति । कालेन योग्य वार्द्धकसमयेन मृतस्य निधमार्हस्य लोकस्य । औषधप्रयोजनं भैषज्यावश्यकत्वं नास्ति । तदा तु भैषज्यं नैवानुकूल्यमाचरति, न तेन रोग उपशाम्यति नियतेः प्राबल्यात् । तदुक्तमभियुक्तैः 'प्राप्तकालो न जीवति' इति । वैद्यके च—

"नाऽकाले म्रियते कश्चिन्नास्ति मृत्युरकालजः ।
यो यस्मिन् म्रियते काले मृत्युकालः स तस्य हि" ।

'न मृतस्यौषधं प्रयोजनम्' इत्थं पाठे मृतस्य प्राणरहित-स्यौषधेन किं प्रयोजनं तन्निष्फलमिति । कालेनेति 'प्रकृत्यादिभ्य-

## स्वकाले स्वल्पमपि प्रभूतत्वस्य प्रयोजनम्भवति ॥ ६२ ॥

---

उपसंख्याने' तृतीया। यद्वा विवक्षातः सप्तम्यर्थे तृतीया। 'भिषगौषधभैषज्यानी'त्यमरः। ओष. प्लोषो दीप्तिर्वा धीयते अत्र इति दधातेः 'कर्मण्यधिकरणे च' इति किः। एवं 'कृदिकारादिति' ङीपि दीर्घत्वम्। यद्वा ओषधेरिदम्। 'ओषधेरजातौ' इत्यनेनाण्। 'मृतं मृतौ याचिते च' इति हैमः। मृङ् प्राणत्यागे, म्रियते। 'गत्यर्था' इत्यादिना क्तः॥ ६१॥

योग्यकाले स्वल्पमपि वस्तु तत् प्रचुरस्य साधकं भवतीति आह स्वेत्यादि। स्वस्य कर्मणः काले समये स्वल्पमपि अतिलघ्वपि वस्तु प्रयोजनमुद्देश्यमभीष्टं वा प्रचुरत्वं साधयति। अकाले तु पुष्कलमपि द्रव्यं वृथा भवति। यथा क्षुधितस्य स्वल्पभोजनमपि श्रेयः। बुभुक्षा विरहितस्यात्युपादेयवस्तुभोजनमपि व्यर्थेति। यद्वा सति सुचिकित्स्ये रोगे औषधबिन्दुरपि उपकरोति। अचिकित्स्ये पुष्कलमपि भेषजं नोपकरोति। 'समकाले स्वल्पमपि प्रभुत्वस्य प्रयोजनं भवतीति' पाठभेदे एकस्मिन् समये प्रभुत्वस्यावश्यकत्वमित्यर्थः। भप भूषणादौ, भप्यते, वार्यते। 'बाहुलकात् पः'। 'प्रभूतं प्रचुरं प्राज्यं' इति हैमः। प्रभवति स्मेति प्रपूर्वाद् भवतेः 'गत्यर्था' इत्यादिना क्तः। ततस्तस्य भावः प्रभूतत्वम्॥ ६२॥

## विशेषज्ञं स्वामिनमाश्रयेत् ॥ ७२ ॥

लोभपरायणं सेवते अनुवर्त्तते यः स लुब्धसेवी, यद्वा लुब्धस्य सेवा अस्यास्तीति लुब्धसेवी। स पावकेच्छया अनलाशया, खद्योतं ज्योतिरिङ्गणं धमति समुद्दीपयति। वह्निलाभे वञ्चितः सन् विफलमनोरथो भ्रान्तेर्भवतीति। तदुक्तं विदाम्वरैः—

'हीनाश्रयो न कर्त्तव्यः कर्त्तव्यो महदाश्रयः'।

कविसमयश्च 'उपासना चेन्महतामुपासना'। पूर्वसूत्रोक्तविषय-समर्थनमनेनोदाहरणमुखेन क्रतम्। अतः शक्तिमद्दयावतः प्रभोराश्रयः कार्य्यः। 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः। लुभ गार्द्धे, लुभ्यति। 'गत्यर्था' इत्यादिना क्तः। खे आकाशे द्योत्यते। द्युत दीप्तौ, भवा चित्वम्। यद्वा खं द्योतयतीव, अण्-प्रत्ययेन जातम् ॥ १७१ ॥

पूर्व्वसूत्रस्य तात्पर्य्यप्रदर्शनमुखेनोपयुक्तस्याश्रयमाह विशेषज्ञ-मिति। विशेषज्ञं मार्ज्ञं निपुणमिति यावत्। स्वामिनं प्रभुम्। आश्रयेदनुसरेत् सेवेतेति। तादृश-स्वामिन-सेवया मनोरथः पूर्त्तिं गमिष्यतीति नात्र सन्देहावसरः। तल्लभम् अविवेकिनं प्रभुमनुवर्त्तेत। तदा ते कार्य्यनैष्फल्यात्। विशेषं जानातीति, ज्ञा अवबोधने, इत्यस्मात् 'आतोऽनुपसर्गे' इत्यनेन कः। 'स्वामी-त्वीश्वरः पतिरीशिता' इत्यमरः। स्वमस्यास्तीति स्वामिन्। 'स्वामिन्नैश्वर्य्ये' इत्यादिना साधुः।

'विशेषज्ञः प्रवीणश्च निपुणो दक्ष इत्यपि'।

इति धरणिः ॥ ७२ ॥

## न नीचोत्तमयोर्विवाहः ॥ ७५ ॥

---

बिन्दुरब्बीजः शक्तिः । नापि शैवदर्शनशारदातिलकोक्त-बिन्दुरिति । नवा वाय्वादिकथा । कुत्रचिदादर्शे सूत्रयोरनयोरेकपदे पाठोऽस्ति । तादृशपाठेऽपि अर्थकाठिन्यं नास्ति । अन्यद् वैद्यकेऽनुसन्धेयम् । पुरुषपदनिरुक्तिः प्रागुक्ता । 'ब्रह्मचर्य-प्रतिष्ठायां वीर्यलाभः' इति योगसूत्रम् । ब्रह्मचर्यमष्टाङ्गमैथुन-परिहारः । तेन वीर्यवान् मेधावी शक्तिमान् आयुष्मांश्च भवति । 'सम्बन्धे सुरते युग्मे राशौ मिथुनमिष्यते' इति व्याडिः । 'मिथुनस्य कर्म मैथुनम्' । ततः 'प्राणभृज्जाति' इत्यनादेशः ॥ ७४ ॥

विवाहमूलत्वात्सङ्गमस्य ततोऽसमयोर्विवाहे निषेधमाह नेति । नीचोत्तमयोर्हीनश्रेष्ठयोः कुलीनाकुलीनयोर्वा । विवाह उपयमः । स च शोभमानः हितकरश्च न भवतीति । तदुक्तं विद्भिः 'विवादश्च विवाहश्च समयोरेव शोभते' । यथा पयसा पयोयोगः शोभनः । न तथा दुष्ट-वारिणा पयोयोगः । तद्वत् समयोर्विवाहो न विषमयोः । धर्मशास्त्रकारैश्चोक्तम् 'गृहस्थः सदृशीं भार्यां विन्देत' । सादृश्यमत्र वयो रूप-गुण-जाति धर्म शीलानामिति । यदुक्तं 'स्त्रीरत्नं दुष्कुलादपि' इति । सा यदि रत्नभूता स्यात्तदा दुष्कुलादपि ग्राह्येति, लोके तादृशी दुर्लभा । 'प्रधानं प्रमुखं प्रवेकानुत्तमोत्तमाः' इत्यमरः । उत्तम इति । तमु काङ्क्षायाम् उत्ताम्यति । उत्ताम्यते वा । अचा घञा वा सिद्धम् । किञ्चातिशयेनोत्कृष्टः । उत्कृष्टार्थ-

**अगम्यागमनादायुर्यशः पुण्यानि क्षीयन्ते ॥ ७९ ॥**

---

इत्येवच्छन्दात्तमप्। द्रव्यप्रकार्यैर्लाभासुः स्यात्। यत्र प्रापणि, विशिष्टं यजनम् विवाहः। स च धर्मो सिद्धः। वैशिष्ट्यन्तु वैध-पतित्वपत्नीत्वज्ञापक शास्त्रीयनियमोक्तसंस्कारविशेषः। अन्यद्धर्म-शास्त्रे ज्योतिःशास्त्रे चास्ति ॥ ७८ ॥

अनिष्टजनकत्वेन पुंसामगम्यागमने ह्यानमाहागम्येति। अगम्या असङ्गमनीया मैथुनायोग्या धर्मशास्त्रे निषिद्धा दुहित्रा-दयः। तासां गमनादृष्ट्यपायकरणात्। आयुर्जीवनकालः। यशो लोकेषु सुख्यातिः, पुण्यं धर्मेण सुकृतिः। एतानि पुंसः क्षीयन्ते विनश्यन्ति।

"अतिप्रसक्तेन्द्रियाणां नरः पतनमिच्छति"। इति स्मृतिः। एषां नाशादात्मनोऽपि नाश. सम्भाव्यते। ततोऽगम्यागमनं सर्व्वथा परिहर्त्तव्यम्। अगम्या यथा, यमस्मृतौ—

"या याऽगम्या शृणामेव निबोध कथयामि ते।
स्वस्त्री गम्या च सर्व्वेषामिति वेद-निरूपिता ॥
अगम्या च तदन्या या इति वेदविदो विदुः।
शूद्राणां विप्रपत्नी च विप्राणां शूद्रकामिनी ॥
अत्यगम्या च निन्द्या च लोके वेदे पतिव्रते।
गुरुपत्नीं,राजपत्नीं सपत्नीं मातरं प्रसूम् ॥
सुतां पुत्रवधूं,श्वश्रूं सगर्भां भगिनीं सतीम्।
सोदर-भ्रातृजायाञ्च भगिनीं भ्रातृकन्यकाम् ॥

## नास्त्यहङ्कार-समः शत्रुः ॥ ७१ ॥
## संसदि शत्रुं न परिक्रोशेत् ॥ ७८ ॥

शिष्याञ्च शिष्यपत्नीञ्च भागिनेनस्य कामिनीम्।
भ्रातृ-पुत्रप्रियाश्चैवा त्वगम्यामाह पद्मजः" ॥

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे। आयुः। इण् गतौ, एति। एतेर्णिच्चेत्यनेनोसिः। यशः। अशू व्याप्तौ, अश्नुते व्याप्नोति। 'अशेर्देवने युट् च' इत्यसुन्। 'पुण्यम्तु सुकृते। सुन्दरे पावने धर्म्मे' इति विश्वः। 'पुवो यण् णुक् ह्रस्वश्च' इत्युणादितो यत् णुक् ह्रस्वश्च ॥ ७६ ॥

अभिमानस्य शत्रुतोऽपि भीषणत्वामिष्टकारित्वे आह नेति। अहङ्कारो गर्व्वोऽभिमानः। स च मत्तः श्रेष्ठो नास्तीति ज्ञानम्। यद्वा आत्मन उत्कर्षकरणम्। तेन समस्तुल्यः भुवने शत्रुरन्यतमो विद्यते। अहङ्कारेण गर्व्विता लोका विवेकाभावाद्‌मत्त इवावैधाचरणं कृत्वा, स्वपरानिष्टं विधाय च काले विनश्यन्ति। यथा वेण-दुर्य्योधन रावणाः। अन्यच्चोक्तं कौटिल्यैः

न च व्याधिसमः शत्रुः न च दैवात् परं बलम्।
न चापत्यसमः स्नेहो नाहङ्कारात् परो रिपुः' ॥

तस्य निवृत्तौ च परमनिर्वृतिः सांख्यभाष्ये उक्ता। तथा च 'सर्व्वाभिमान-निवर्त्तनतोऽस्य मुक्तिः'। शत्रुर्बहिःस्थितोऽनिष्टं साधयति। अभिमानस्त्वान्तःस्थः सर्व्वमिति। स्वाभिमानेन अन्ये ये भर्त्सयन्ते, ते पुनः शत्रवः सन्तः प्रतिहिंसन्तीति निश्चितम्।

## शत्रु-व्यसनं श्रवण-सुखम् ॥ ७९ ॥

इति चाणक्यसूत्रे नीतिदर्शनाख्ये तृतीयोऽध्यायः ॥ ३ ॥

---

मन ज्ञाने, अभिमननम् । अभिपूर्व्वात् ततो घञ् । सुगममन्यत् ॥७७॥

परिषदि द्वेषात् शत्रोराक्रोशवचने निषेधमाह संसदीति । संसदि सभायाम् । शत्रुं द्वेष्टारमरातिं न परिक्रोशेत् नापि तस्य क्रोधोद्रेकं कुर्य्यात् । तं प्रति रोषं जुगुप्सनञ्च न विदध्यात् । तत्र तादृशाचरणेऽतीव दुष्टः सन् छिद्रानुसन्धाता भवेदिति भावः । सभायां सौजन्य-शिष्टाचारप्रदर्शनेन कार्य्यसौकर्य्यं भवति । तादृश एव नियमः सभ्यानाम् । 'सभा-संसत्-समिति-परिषदः' । 'स्त्रियां सामाजिके गोष्ठ्यां द्यूतमन्दिरयोः सभा' इति रभसः । सम्यक् सीदन्त्यस्यां विद्वांसो विचारार्थम् । षद्लृ-विशरणादौ, सीदति । सम्पदादित्वात् क्विपा सिद्धम् ॥ ७८ ।

शत्रूणां विपद्वार्त्ताश्रवणे श्रवणसुखमभिजायते तदाह शत्रुरिति । शत्रूणां वैरिणाम् अरातीनामिति । व्यसनं तेषां दुःखशोकापदः । तच्छ्रवणे आकर्णनं व्यसनस्य श्रुतेः । सुखं प्रीतिकरभावो जायते इति शेषः । तदात्वे ममायामितानिष्टकारिणः शत्रोः विपत् सञ्जायते । स तया व्यसनी भवतीति वार्त्ता आपाततः शुभकरी । प्रकृति-सरणि-समाश्रितानामेषा रीतिः यत् सुहृदां शुभवार्त्ता अमित्राणां च दुःखवार्त्ता प्रीतिकरीति । निदर्शि कोपादिकं प्रागुक्तम् ॥ ७९ ॥

# चतुर्थोऽध्यायः ।

—०*०—

## अधनस्य बुद्धिर्न विद्यते ॥ १ ॥

नीति-नौकर्णधारस्य कौटिल्यस्य महामतेः ।
सूत्राणामाशुबोधाय टीका सारार्थबोधिनी ॥
इति दुर्गमभूतपाश्चयमूलव्याख्यायां श्रीईश्वरचन्द्रशर्मशास्त्रि
कृतायां सारार्थबोधिन्यां तृतीयोऽध्यायः ।

—०*०—

तृतीयेऽध्याये सामान्यविशेषप्रकारेण मुख्यविषयान् प्रसङ्गागतविषयांश्चोक्त्वा सुहृद्व्यवहारञ्चोपदिश्य सम्प्रति तुरीयाध्याये निर्धनस्यार्थचिन्ताव्याकुलचित्तस्य बुद्धिह्रासमाह अधनेति । अधनस्य दीनस्य निःस्वस्य चेति । बुद्धिर्धीर्मतिः । न विद्यते न प्रसरतीति । अर्थाभावचिन्ताव्याकुलतया नियतं बुद्धेर्मान्द्यात् प्रतिभा नश्यत्येव । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञे'त्यमरः । पुष्कल-विभवे सति, परिधान-पान-भोजन-चिन्ताराहित्येन क्षीर-नवनीत-हविर्भोजनेन च बुद्धेः प्राखर्य्यं सम्पद्यते । तथा च "सद्यो-भोजस्करं दुग्धम्" । 'तथा धी-स्मृतिमेधाग्निकारिणी शस्यते घृतम्' ।

"नवनीतं हितं गव्यं हृद्यं वर्णबलाग्निकृत्" ।

इत्यादि वैद्यके । दीनस्य तु तन्नोपयुज्यते धनाभावात् । अत्र मृच्छकटिके दैन्यवर्णने । यदभिहितं प्रागुक्तम् ॥ १ ॥

हितमप्यधनस्य वाक्यं न शृणोति ॥ २ ॥

धनहीनः स्वभार्य्ययाऽप्यवमन्यते ॥ ३ ॥

---

दैन्यात्तस्य हितोपदेशश्रवणेऽपि श्रोतॄणां वैमुख्यमाह हितमिति। अधनस्य निःस्वस्य दीनस्येति। हितं वाक्यं सदुपदेशमुपकारजनकं यदेतल्लोको न शृणोति नाकर्णयति। यतो दैन्याल्लोकस्य सामान्यदृष्ट्या निर्धनः तुच्छास्पदो भवति। अतस्तदीयं प्रियमिष्टमपि न शृणोति श्रुत्वा च हृदयबुद्ध्या नावधारयति। 'वाचकस्तु कुत्सिते हीने वचनार्थे च वाच्यवत्' इति व्याडिः। 'तिङ्सुबन्तचयो वाक्यम्' इति शाब्दिकाः। तिङन्तानां चयो यथा 'पचति पश्य' 'पचति भवति' वाक्यं भवतीत्यर्थः। सुबन्तानां चयः। 'प्रकृतिसिद्धमिदं हि महात्मनाम्' इत्यादि। महाभाष्यकारमते अत्र 'भवति' इत्यध्याहारस्यावश्यकत्वाभावात् न वाक्यम्। अन्ये तु 'वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्त-पदोच्चय' इत्याहुः। हितमिति। धाञ् धारणपोषणयोः। दधातेः धीयते इति क्तप्रत्ययः। 'दधातेः हिः' इत्यनेन साधु। वच भाषणे, उच्यते। वचेः ण्यत् 'चजोः' इति शब्दसंज्ञायाम् कुत्वम् ॥ २ ॥

धनाभावात् स्वजनैरवमानमाह धनेति। धनेनार्थेन हीनो निर्धनः पुरुषः। स्वस्यात्मनः भार्य्यया पत्न्याप्यवमन्यते अवज्ञायते। पत्न्यादयः सर्वे सत्सु धनेषु सुखिनो भवन्ति। ते च धनिनं गृहपतिमाद्रियन्ते। धनाभावे सुखाभावादवमन्यन्ते च

पुष्पहीनं सहकारमपि नोपासते भ्रमराः॥ ४॥

---

तदुक्तं कविभिः 'माता निन्दति, नाभिनन्दति सुतः कान्ता च नालिङ्गते' इति। धनाभावादित्यर्थः। फल-पुष्प-पत्रविहीनं महीरुहं यथा विहगा त्यजन्ति। यथा च शुष्कं सरः सारसाः परिहरन्ति तद्वद्धनहीन-मानवं कुटुम्बाः विजहति। अन्यच्चोक्तम् कविभिः 'असौ जीयादेकः सकलगुणहीनोऽपि धनवान्, यदि-द्वारे यस्य तृण-लवसमाः सन्ति गुणिनः'। हीनः। ओहाक् त्यागे, हीयते। तत. आदिकर्मणि क्तप्रत्ययः, कर्मणि वा। 'घु मा स्था' इत्यादिनेत्वम्। 'ओदितश्च' इति नत्वम्। डुभृञ् धारण-पोषणयोः, भ्रियते भूर्यते वा। भृ भरणादौ, इत्युभयो-र्णत्। यत्तु क्षीरस्वामिना 'संज्ञाया भृञ्' अष्टलोष्वेता तत् साधितं तत्र, संज्ञायामर्थे 'समजनिषद' इत्यादिना परत्वात् क्यपा भाव्यम्। संज्ञा पर्युदासस्तु पुंसि सावकाशो नतु स्त्रियाम्। यतः 'तदनुबन्धग्रहणे नातदनुबन्धकस्य' इति न्यायात् भृञ एव क्यप् स्यान्न तु डुभृञः॥ २॥

पूर्वसूत्रोदाहरणव्याजेन प्रयोजनसिद्ध्यभावे वस्तुपरिहार-माह पुष्पेति। पुष्पेण प्रसूनेन हीनं रहितम्। सहकारं सुगन्धि-रसालवृक्षम्। यद्वा सामान्य चूततरुम्। भ्रमराः मधुलिहः। नोपासते कुसुमाभावात् तत्तरुसमीपं नोपसर्पन्ति। विशुष्कं सरः सारसाः। दृष्टान्तभूतं पूर्वसूत्रस्येदं सूत्रमिति। 'पुष्पं विकाशे चार्तवे। धनदस्य विमाने च प्रसूने नेत्र-

## विद्या धनमधनानाम् ॥ ५ ॥

रुच्यपि' इति हैमः। पुष्प विकसने, पुष्प्यति। पचाद्यचा सिद्धम्। 'सहकारोऽति सौरभः' इत्यमरः। इन्दं सञ्चारयति मेलयतीत्यचा सिद्धम्। द्वीनपदं प्राङ् निरुक्तम्। भ्रमराः। भ्रमु अनवस्थाने, भ्रमति। 'अर्त्तिकमि भ्रमि चमि' इत्याद्यौणादिकात् करण्॥ ४॥

निर्धनस्य पुंसो विद्यया धनवत्त्वमाह विद्येति। अधनानां दरिद्राणां निःस्वानामिति। विद्या शास्त्राध्ययनजनितं ज्ञानं पाण्डित्यमिति च सैव धनमर्थः। यतस्तया जगति धनं संघट्यते यद्वा तपोधनवद् विद्यैव धनं श्रेयम्। 'धनन्तु गोधने वित्ते' इति विश्वः। धन धान्ये, धनति। सदचासिद्धम्। अन्यच्च सुभाषितसन्दर्भे 'विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम्' इत्यादि। अपरञ्च मानवे द्वितीयाध्याये—

"श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि"।

यथोक्तं—

"पिता बन्धुर्वयश्चैव तपो विद्या यथोत्तरम्।
पूजनीयानि सर्वेषां विद्या तेषां गरीयसी"॥

अन्यच्च नीतौ—

"ये बालभावान्न पठन्ति विद्याम्,
ये यौवनस्था अधना अदाराः।

# विद्या चौरैरपि न ग्राह्या ॥ ६० ॥

ते शोचनीया इह जीवलोके,
मनुष्यरूपेण मृगाश्चरन्ति" ॥

विद् ज्ञाने, वेत्तीत्यतः कथप् ॥ ५ ॥

विद्याया अनपहरणीयत्वमाह विद्येति । चौरैः तस्करैर्दस्यु-भिश्च । अपि निश्चितम् । न ग्राह्या नैवापहरणीया । चौरः सर्वं धनमपहर्तुं शक्ताः । विद्याया आन्तरद्रव्यत्वात्तां अप-हर्तुं न शक्नुवन्ति । तदुक्तं गारुडे—

"गृहे चाभ्यन्तरे द्रव्यं लग्नं चैव तु दृश्यते ।
अशेषं हरणीयञ्च विद्या न ह्रियते परैः ॥
अन्त्यजा अपि यां प्राप्य क्रीडन्ति यक्ष-राक्षसैः ।
सा विद्या केन नीयेत यस्याः कोऽन्यः समीऽपि न ॥
स्वरेण कुञ्जरं हन्ति सर्पेण तुरङ्गमम् ।
मक्षिकापदमात्रस्य विषस्य विषमा गतिः ॥
एवं विधं विधिं वत्स ! विद्यामन्त्रप्रभावतः ।
जीवितं भक्षितं पुंभिः तस्माद्विद्या परात्परा" ॥

सूरिभिश्चोक्तम्—

"ज्ञातिभिर्वण्ट्यतेनैव चौरेणापि न नीयते ।
दानेनैव क्षयं याति विद्यारत्नं महाधनम्" ॥

चुर स्तेये, चोरणम् । अप्रत्ययात् । संज्ञापूर्व्वकत्वान्न गुणः । चुरा शीलमस्य छत्रादिभ्यो णः, अन्ये तु प्रज्ञाद्यत्ता तत्-

विद्यया ख्यातिः ॥ ७ ॥

यशः शरीरं न विनश्यति ॥ ८ ॥

---

चिरमाहुः। 'नष्टार्थं' इत्यत्र 'न प्राप्नोसि' पाठे ग्रहणायोग्येति तदर्थः। प्रागुक्तमन्यत् ॥ ६ ॥

मानवस्य ख्यातिनिदानमाह विद्ययेति। विद्यया ज्ञानविशेषेण सुशिक्षया वा। ख्यातिः कीर्त्तिर्भवतीत्यर्थः। विदुषा सदाचरणाध्यापनपरोपकाराणामनुष्ठानेन कीर्त्तिं ख्याप्यते। तथा सुखी यशस्वी च लोके। तदुक्तं गारुडे—

"विद्या विवेकयोगेन शुभाशुभविचारिणाम्।
विद्यते सर्व्वकामाप्तिस्तस्माद्विद्या परा मता ॥
विद्या विचारतत्त्वज्ञाः शास्त्रः सन्मार्गगामिनः।
भुञ्जतेऽपि हि भोगानि गच्छन्ति परमां गतिम् ॥
नहि विद्या कुलं जातिं रूपं पौरुषमावृताम्।
यशांसि सर्व्वलोकानां पठिता उपकारिता" ॥

'भोगानि' इत्यत्र 'भोग्यानि' क्वचित् पाठान्तरम्। 'प्रथा ख्यातौ' इत्यमरः। वेदान्ते तु ख्यातिशब्दोऽन्यार्थबोधकः। सांख्यनये ज्ञानार्थकः ख्यातिशब्दः। ख्या प्रकथने, ख्यानम्। चक्षिङादेशो वा। ततः क्तिन्। 'विद्यया ख्यापिता ख्याति'-रिति भिन्नपाठे विद्यया ख्यातिः प्रथा सुप्रकटा भवतीत्यर्थः ॥७॥

कीर्त्तिमग्निदेहस्थायिनमरत्वमाह यश इति। यशः कीर्त्तिः समज्ञेति यावत्। तेन युक्तं सूक्ष्मं वा शरीरं देहः। यश्

25175

## न म्लेच्छभाषणं शिक्षेत ॥ १२ ॥

ध्यानार्थे यदाशुजिज्ञासुर्वा भवेत्तदा नीति शिल्पादि विषये उप-देष्टव्य स एवेति नीतिविदां समय । यतो नीतौ त्रिवर्गस्यापे-क्षास्ति न मोक्ष मार्गस्य । विष्णुनाप्युक्तम्—

"सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव स " इति ।

त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकः" ।

इत्यमर । उपेतव्येति । उपपूर्वादेतेर्विद्याग्रहणार्थे । मोक्ष-स्येति । नीत्येनेति तृतीया युक्ता । यद्वा कर्मणि षष्ठीति केचित् ॥ १२ ॥

पुलिन्दादिभाषणस्य शिक्षायां ज्ञाननैपुण्य-बुद्धिनैर्मल्या-भावात् तन्निषेधमाह नेति । म्लेच्छानां किरात शबर पुलिन्दानां भाषणं भाषा कथनञ्चेति । तत्र शिक्षेत नापि ग्रन्थादरतो वा षभ्यासं कुर्यात् । सा च भाषा त्रिविधा । काव्या लोक्या देश्या च । तासु द्वे प्रसिद्धे । देश्योक्ता भोजराजेन । तथा च—

'देशे देशे नरेन्द्राणां जनानाञ्च स्वके स्वके ।

भङ्ग्या विभिद्यते यस्यास्तमाहेश्य प्रवीण्तिं तम्" ॥

अन्यच्चोक्तमृषिणा—

'न शातयेदिष्टकानि फलानि तु फलेन वै ।

न म्लेच्छभाषां शिक्षेत नाकर्षेच्च कदाच(श)नम्" ॥

एवमेव महाभाष्ये 'न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह्वा एष यदपशब्द' । 'म्लेच्छा मामूभूम इत्यध्येयं व्याकरम्' । न म्लेच्छ-देशे' इति विष्णुसूत्रम् । तत् स्वरूपन्तत्रैवोक्तं यथा—

## म्लेच्छानामपि सुवृत्तं ग्राह्यम् ॥ १४ ॥

"चातुर्वर्ण्य-व्यवस्थानं यस्मिन् देशे न विद्यते ।
स म्लेच्छदेशो विज्ञेय आर्य्यावर्त्तस्ततः परम्' ॥

भास्कराचार्य्यास्त्वाहुः—

'वर्णव्यवस्थितिरिहैव कुमारिकाख्ये
शेषेषु चान्त्यजजना निवसन्ति सर्व्वे' ।

अन्यच्चोक्तं—

"गोमांसखादको यस्तु विरुद्धं बहु भाषते ।
सर्व्वाचारपरिभ्रष्टो म्लेच्छ इत्यभिधीयते" ॥

केचित्तु विद्वांसः प्रोचुः म्लेच्छादिदेशविमर्शो धर्म्मादि विषये न तु 'नीति मार्गादौ'। वाणिज्य-विद्याध्ययनार्थार्जनेषु न देश-विचारः। तथा च 'नीचादप्युत्तमा विद्या'मिति। अपरञ्चोक्तं मनुना—'अब्राह्मणा दध्ययनमापत्काले विधीयते' इति च। सूतसंहितायाञ्च—

"ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः ।
अस्यामनेन चौर्य्येण म्लेच्छो विप्रः प्रजायते" ॥

इति। 'शबरो म्लेच्छभेदे च'। 'किरातो म्लेच्छभेदे स्यात्' इति मेदिनी। 'पुलिन्दः कथ्यते म्लेच्छे' इति तारपालः। 'भेदाः किरात-शबराः पुलिन्दा म्लेच्छजातयः' इत्यमरश्च। एतेषां मते एतएव म्लेच्छदेशत्वेन ख्याताः। म्लेच्छ अव्यक्ते शब्दे, म्लेच्छति। अच्प्रत्ययेन सिद्धः ॥ १३ ॥

हीनजनतोऽपि सुवृत्तग्रहणमाह म्लेच्छानामिति। म्लेच्छानां खसादिविषयजातानां लोकानाम्। यत् सुवृत्तं सुशिक्षा सौशील्यं वाणिज्यमिति यावत्। तदपि ग्रहणीयं शिक्षणीयम्। यदुक्तम्—

'विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्'। प्रागुक्तमन्यत्। गुणाः सुचरितानि सर्वतो ग्राह्याणि। तथा चैतस्य मधुचाणक्ये 'सिंहादेकं बकादेकं षट् शुनः त्रीणि गर्दभात्'। गुणैर्नीचोऽपि श्रेष्ठत्वं याति यथा विदुरादिः। अन्यच्च। 'सद्वृत्ताचरिताभ्यासे महत्त्वं याति निश्चितम्'। अतो म्लेच्छानां सुचरितानुकरणे न दोषः। सारग्रहणे नोच्चावचविचारः। तथा च कापिलं सूत्रं 'सर्वतः सारादानं षट्पदवत्'। पुराणे च 'सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः'। केचित्तु वाणिज्यविद्याशिक्षार्थं म्लेच्छदेशगमनं युक्तम्। ततः प्रतिगमनात्परं प्रायश्चित्तमनुष्ठेयमित्याहुः। तथा च श्रुतिः 'नावेव सिन्धुम्'। 'समुद्रसंयानम्' इति बौधायनश्च। अत्र नावा द्वीपान्तरगमनमिति तत् सूत्रव्याख्यानम्। 'आघूर्णितो वा वातेन स्थितः पोते महार्णवे' इति मार्कण्डेयपुराणे। वराहपुराणे च—

"समुद्रयाने रत्नानि महामूल्यानि साधुभिः।
रत्नपरीक्षकैः सार्द्धं आनयिष्ये बहूनि च॥
शुल्केन सह सम्प्राप्तो महान्तं लवणार्णवम्।
पोतारूढाः ततः सर्वे पोतवाहैरुपासिताः॥
अपारे दुस्तरेऽगाधे यान्ति वेगेन नित्यशः"।

## शत्रोरपि सद्गुणो ग्राह्यः ॥ १५ ॥
## विषादप्यमृतं ग्राह्यम् ॥ १६ ॥

---

यथक्लासुद्रभावसंख्याने प्रत्ययाधिकं तदाह याज्ञवल्क्यस्मृति-व्याख्यानेऽपरार्कः प्रागुक्तमन्यत्र । १४ ॥

गुणग्रहणे शत्रु-मित्र-प्रतीति-परिहारमाह शत्रोरपीति । शत्रोरातेः वैरिण इति । अपि निश्चयार्थे । सन् श्रेष्ठो गौरवधारः प्रशंसनीयो गुणः । स च वैदुष्य-सौशील्यादिः । ग्राह्यः उपादेयो ग्रहणीयः । उक्तञ्च महाभारते 'शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि' । नापि शत्रोर्दोषो ग्राह्यो गुणस्त्याज्यः । एवं मित्रस्यापि दोषो ग्राह्यः परिहाराय विरुद्धये वा । यतः

'गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः' ।

इति हृदयार्थमस्ति । सद्गुण इत्युक्तेरसद्गुणः कृत्रिमगुणोऽपि हेयः । कविसमयश्च 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' । 'मौर्व्यां प्रधानादौ सत्त्वशुक्लसन्ध्यादिके गुणः' इत्यमरः । गुण आमन्त्रणे, गुणयते । ततो घञ् । १५ ॥

पीयूषस्य महार्घत्वात्तस्य गरलादपि ग्रहणीयत्वमाह विषादिति । विषाद् गरलात् कालकूटादिति । अमृतं सुधा पीयूषम् । महार्घद्रव्यं वेति । ग्राह्यमादानीयम् । यद् महार्घवस्तु तत् विषाद् पूतेनापि संग्राह्यम् । ग्राह्यत्वं हितकरोपादेयत्वेनेति । अमृतपदेनामृततुल्यमपि बोध्यम् । ननु स्वमादन्य-सुद्रा अन्यदुपादेयम् । तदुक्तं महर्षिणा 'विषादप्यमृतं ग्राह्यममे-

## गुणे न मत्सरः कर्त्तव्यः ॥ १७ ॥

ध्यादपि काञ्चनम्'। अन्यत्र भारते यदुक्तं 'यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे' इति तत्प्रकृतकर्त्तृकप्रियाचरणविषये धर्म्मविषये वा मन्तव्यम्। स च शाठ्य-पापादिभिर्मिश्रितो धर्म्मोऽधर्म्माय भवतीति। 'पीयूषममृतं सुधा' इत्यमरः। विषादिति। 'गरले विषमम्भसि च स्त्रियामतिविषायाम्' इत्युमविवेके। विषॢ व्याप्तौ, वेवेष्टि कायम्। विष प्रयोगे वा, ततः 'इगुपध' इत्यादिना कः। 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते। अयाचिते च मोक्षे ना' इति मेदिनी। न मृतं मरणमत्रेत्यमृतम् ॥ १६ ॥

गुणविषये मात्सर्य्यनिषेधमाह गुण इति। गुणे बुद्धेः प्राखर्य्ये विद्यादौ। यद्वा पुंसो विषयोत्कर्षे। मत्सरः मात्सर्य्योऽपरस्योत्कर्षे द्वेषः। मत्सर इति भावप्रधाननिर्देशः, तेन मत्सरतेत्यर्थः। यद्वा तत्कार्य्यं मात्सर्य्यम्। न कर्त्तव्यो नापि विधेयः। तदात्वे मिथ्याहानिः समाजानिष्टं स्वमानसमालिन्यं वैरञ्च वर्द्धते। गुणदर्शने हर्षो विधेयः। यतः सर्व्वत्र गुणोऽर्हणीय हितकरश्च। उक्तञ्च कविभिः 'गुणैरुत्तमतां याति'। 'पदं हि सर्व्वत्र गुणैर्निधीयते' इति च। 'मत्सरोऽन्यशुभद्वेषे तद्वत् कृपणयोस्त्रिषु' इत्यमरः। मदी हर्षे, माद्यति परकृच्छ्रे। ततः 'कृ-भू मदिभ्यः कित्' इति रसः।

"गुणो मौर्व्व्यामप्रधाने रूपादौ सूद इन्द्रिये।

**अवस्थया पुरुषः सम्मान्यते ॥ १८ ॥**

**स्थान एव नराः पूज्यन्ते ॥ १९ ॥**

---

स्थामगोत्र्यादि मत्स्यादि सम्बाधाद्वस्ति वस्तुषु" ॥
इति मेदिनी। गुप आमन्त्रणे, गुप्यते इति। ततो घञ् ॥१७॥

अवस्थया पुंसां गौरवमाह अवस्थयेति। अवस्था दशा। तामवस्यते धत्ते यौवनादिर्विशेषोऽवस्था चेति। यद्वा तया अवस्थया धनविद्यामानपरिजनस्थितिदशया। पुरुषः पुमान् नर इति। 'पुरुषः आत्मनि नरे पुन्नागे च' इति कोष.। सम्मान्यते, पूज्यते गरीयान् भवति। उक्तञ्च सूरिभिः 'अवस्था पूज्यते राजन् न शरीरं शरीरिणाम्'। यथा च छत्र-चामर-सचिव-वारणाश्व सामन्त-दुर्ग-पोत सेनादिभिः, राजेति सम्मान्यते लोके। एषामभावे यावत्समर्थो राजा अवमन्यते। तदुक्तं—

"हस्ति-घोटक-सामन्त-नौका-दिग्दिग साधनैः।
राजा भवति लोकेऽस्मिन् न पुनर्नाममात्रतः" ॥

इति। 'शिरोधः कान्तिकोऽवस्था' इत्यमरः। अवपूर्वात् स्थितेः रङ.। 'ग्रयन्त्याद्याभिति' वाचकात्। पुर अग्रगमने, पुरति। 'पुरः कुशन्' इत्यनेन च सिद्धम्। अत. सततं सदवस्थाकारणेन भाव्यम् ॥ १८ ॥

योग्य स्थानावस्थितेर्गौरवकरत्वमाह स्थान इति। स्थाने स्वयोग्याश्रयभूमौ। यस्य यदाश्रयं योग्यं हितकरं स्थानं तस्य तदेव मुख्यम्, यथा शैलगह्वरं सिंहस्य। नराणान्तु निर्भयवारि-

## आर्य्य-वृत्तमनुतिष्ठेत् ॥ २० ॥

---

वायुपूर्णनिरत्ययस्थानम् । नरा मानवाः पूज्यन्ते सम्मान्यन्ते लोकैरिति शेषः । ननु परायत्ते अयोग्ये च स्थाने केवल श्येष्ठा भवन्ति । स्थानगौरवाभावात् । तदुक्तं कविना—

स्थानस्थितस्य पद्मस्य सहायौ वारिभास्करौ ।
स्थानच्युतस्य तस्यैव क्लेद-शोषकरावुभौ" ॥

अन्यच्च—

"स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः" ।

यत्तु—'स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा द्विजाः' ।
इति तत् पूर्व्वस्थानादुत्कृष्टस्थानलाभविषये । अपरञ्च सामान्य-नीतौ—

"स्थानं प्रधानं न बलं प्रधानम्
स्थानस्थितः कापुरुषोऽपि सिंहः" ।

इति सहकारि-प्राधान्यादाह । 'स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे' इति मेदिनी । स्थीयते अत्रेति स्थानम् । अधि-करणे भावे वा ल्युट् । नरः । नृ नये । नरति, नृणाति वा अच प्रत्ययेन सिद्धम् ॥ १९ ॥

महतामनुकरणे स्रोयमहत्त्वहेतुः स्यात्तदाह आर्य्येति । आर्य्याः आर्य्यावर्त्तवासिनः शिष्टाः । विद्या-विनय-नीति-धर्म-ज्ञान-सम्पन्नाः । तेषां वृत्तमाचरणं चरितम् । तदनुतिष्ठेत् आश्र-येत् समाचरेदिति । तदुक्तं वसिष्ठैः—

## न कदापि मर्य्यादामतिक्रमेत् ॥ २१ ॥

"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे यः स आर्य्य इति स्मृतः" ॥

ते चार्य्या यत्रागमनादावर्त्तन्ते स आर्य्यावर्त्ताभिधो देशः । तदुक्तं मानवे—"आसमुद्रात्तु वै पूर्व्वादासमुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः" ॥

तदेव भारतं वर्षम् । तथा च—

"वर्षमस्य विदुः प्राज्ञाः कर्म्मलोकञ्च भारतम्" ।

अन्यत्र—मैत्रेयं प्रति पराशरः—

"उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" ॥

महाकाव्ये शिशुपालवधे च—

"एतदूरगुरुभारभारतं वर्षमद्य मम वर्त्तते वशे" ।

इति । 'आर्य्य-सभ्य-सज्जन-साधवः' इत्यमरः । ऋ गतौ, अर्य्यते । अर्त्तुं योग्यो वा । 'ऋहलोर्ण्यत्' इत्यनेन सिद्धम् । 'वृत्तं वृत्तौ दृढे मृते । चरिते वर्त्तुले' इति हैमः । वृतु वर्त्तने, वर्त्तते । ततः, क्तप्रत्ययेन सिद्धम् ॥ २० ॥

कार्य्यमर्य्यादालङ्घने नीतिविरोधात्तन्निषेधमाह नेति । मर्य्यादा सदाचरणसीमा नीतिनियममिति । कदापि कस्मिन्कालेऽपि । नातिक्रमेन्नैव लङ्घयेत् । यतस्तल्लङ्घने तु यशद्विषये सत्वहानिः साहसाधिगमश्च स्यात् । पुनस्तत्-

नास्त्यर्घः पुरुष-रत्नस्य ॥ २२ ॥

न स्त्रीरत्नसमं रत्नम् ॥ २३ ॥

---

करणमनायाससाध्यम्भवेत्। क्वापि च मृषाकथन प्रतिज्ञाभङ्ग-दोषोऽपि आपतति। इत्थम् न्याय्यपथ-स्थितिर्मर्य्यादेति। 'मर्य्यादा धारणा स्थितिः' इत्यमरः। मर्य्या इति सीमार्थे अव्ययम्। तत्र दीयते। प्राग्वदङ्। यति पूर्व्वात् क्रमैर्विधिलिङ् ॥ २१ ॥

श्रेष्ठपुरुषस्य मूल्याभावमाह नेति। पुरुषरत्नस्य पुरुषेषु श्रेष्ठस्य उत्तमपुरुषस्येति यावत्। अर्घोमूल्यं नास्ति न विद्यते। अन्येषां रत्नानां रत्नवणिग्भिर्मूल्यं निरूप्यते पुरुषरत्नस्य तु केनापि मूल्यं निरूपयितुं न शक्यते वैदुष्यादिगुणस्यापरिमितत्वात्। 'मूल्ये पूजाविधावर्घः' इत्यमरः। अर्घ मह पूजायाम्, अर्घ्यते अनेन। 'हलश्चेति' घञ्। ततो न्यङ्क्वादित्वात् सिद्धम्। अर्घिधौत्वन्तरम्। तेन वा सिद्धम्। 'रत्न सजाति श्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी। रमु क्रीडायाम्, रम्यते। ततो रमन्तः। अन्तर्भावितण्यर्थो वा। यद्वा रमन्तेऽस्मिन्। 'रमेस्त च' इत्यौणादिकसूत्राभ्नः। नेड् वशोत्यादिना नेट्। 'घेरनिटि इत्यादिना सिद्धम् ॥ २२ ॥

सर्व्वरत्नत स्त्रीरत्नस्य श्रेष्ठ्यमाह नेति। स्त्रीरत्नम्। स्त्री, वरवर्णिनी। सैव रत्नाधिका। तदमूल्यम्। मूल्येन तादृश्याः वरवर्णिन्या दुर्लभत्वात् क्रय्यलाभावः। एतत्तुल्यं रत्नं भुवि

## दुर्लभं रत्नम् ॥ २४ ॥

---

नास्ति । तथाच मार्कण्डेयपुराणे 'स्त्रीरत्नमति चार्व्वङ्गी द्योत-यन्ती दिशस्त्विषा' । स्त्रीरत्नं स्त्रीषु श्रेष्ठम् ।—'जातौ यदुत्कृष्टं तद्रत्नम्' । 'विष्णुपुराणे तत्रोक्तान्येव चतुर्द्दशरत्नानि यथा—

'चक्रं रथो मणिः खड्गश्चर्म्म रत्नञ्च पञ्चमम् ।
केतुर्निधिश्च सप्तैवमप्राणानि प्रचक्षते ॥
भार्य्या पुरोहितश्चैव सेनानी रथकृच्च यः ।
पत्त्यश्वौ कलभश्चेति प्राणिनः सप्त कीर्त्तिताः ॥
चतुर्द्दशेति रत्नानि सर्व्वेषां चक्रवर्त्तिनाम्' ।

अन्यच्चोक्तं सूरिभिः—

"सर्व्वस्यैव रत्नस्य वेत्ता च भुवि विद्यते ।
स्त्रीरत्नस्य च तत्त्वज्ञा न सन्ति जगतीतले" ॥

प्रागुक्तमन्यत् ॥ २३ ॥

मणिः सततमभीष्टलाभात् दुरिति । रत्नं मणि प्रभृति । तत्र स्वजाति-श्रेष्ठम् । तद्दुर्लभं भुवि । यद्युक्तेनैव केनचित् परीक्ष्यते । अपरञ्च रत्नतत्त्वं भोजराजीय-युक्तिकल्पतरौ गरुड़पुराणे च वर्णितमस्ति । तथाचोक्तम्—

"परीक्षा परिशुद्धानां रत्नानां पृथिवीभुजा ।
धारणं संग्रहो वापि कार्य्यः श्रियमभीप्सता ॥
शास्त्रज्ञाः कुशलाश्चापि रत्नभाजः परीक्षकाः ।
त एव मूल्यज्ञातारो वेत्तारः परिकीर्त्तिताः" ॥

## अयशो भयं भयेषु २५ ॥

'रत्नं स्वजाति श्रेष्ठे स्यात् मणावपि नपुंसकम्' इति हैम-कोषे। रत्नस्य धारणञ्च प्रशस्तं कीर्त्तितं राजवल्लभे। तथाच—

"धन्यं यशस्यमायुष्यं श्रीमद्व्यसनसूदनम्।
हर्षणं काम्यमोजस्यं रत्नाभरणधारणम्" ॥

तानि च सूर्य्य-चन्द्रकान्त-पद्मराग-नीलकान्तादीनि विविधानि। मातुलानन्यत्॥ २४॥

सुधिया मानवानां लोकेषु श्रेष्ठ-भयमाह अयश इति। सर्व्वेषु भयेषु साध्वसेषु। यद्वा तज्जनकेषु विषयेषु। पुंसामयशो-ऽपकीर्त्तिः कुत्सार्थां भयं भीतिरिव मन्तव्यमेव। तथा च भारते—

"सम्भावितस्याऽपकीर्त्ति र्मरणादतिरिच्यते"।

अन्यच्च तत्रैव—

"अकीर्त्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्"।

अपरञ्च—

"अपमानं तथा लज्जा बन्धनं भयमेव च।
रोग-शोकश्चतिभङ्गो मृत्युश्चाष्टविधः स्मृतः॥"

कालेऽपमानविशेषो मृत्युदेश्यो भवति। कविसमयश्च 'परीवादस्तथ्यो हरति हि महिमानं जनरवः' इति। 'लोकवादो जनरवः परीवादापवादयोः'। सर्व्वैषकथानुहाने अयशो महद्भवति। तदुक्तं महर्षिणा 'अयशो महदाप्नोति नरकञ्चाधि-

## नास्त्यलसस्य शास्त्राधिगमः ॥ २६ ॥
## न स्त्रैणस्य स्वर्गावाप्तिर्धर्मकृत्यं च ॥ २७ ॥

---

गच्छति'। अतः भयवादाश्रमस्थाने मर्य्यादया पराप्नुतः स्यात्। 'भयं भोगो भयहरं' इति ईमः। भयम्। ‹अभी भये, बिभेति। 'पञ्चमी भयादीनामुपसंख्यानम्'। बाहुलकादङ् वा ॥ २५ ॥

कार्य्यालसस्य निरुत्साहस्य शास्त्राध्ययनाभावकाल नैति। अलसस्य मन्दस्य कार्येन्द्रियशक्तिहीनस्य। शास्त्राधिगमो- शास्त्रार्थबोधः प्रतीतिरिति। नास्ति न सम्भवति। तदुक्तं नीतिज्ञैः—

"अलसो मन्दबुद्धिश्च सुखी च व्याधि-पीड़ितः।
निद्रालुः कामुकश्चैव षडेते शास्त्रवर्जिताः" ॥

शास्त्रार्थाधिगमे सामर्थ्यं यथा—

"मेधावी वाग्मी च सुस्थः कौशलपरायणः।
उद्यमशीलोऽप्रमादी च विद्यार्थी स भवेत् सदा" ॥

मेधावी स्मृतिमान् नीरोगः शास्त्रबोधे योग्यः। शास्त्रपदं पाङ्-क्तिकम्। 'आलस्य' इति पाठे तु अलस एवेति स्वार्थे ष्यञ्। अस क्षेपणे, अलसतीति पचा सिद्धम्। अन्यच्च—

"आलस्याद् बुद्धिमान्द्यञ्च आलस्यान्नाशकं क्रमम्।
आलस्यादप्रतिष्ठैव गौरवं तेन नश्यति ॥"

अतो भूतिमिच्छता सदाऽलस्यं परित्यजेत ॥ २६ ॥

कामिन्यासक्तस्य पुंसः धर्मकार्य्यं स्वर्गलाभ सम्भावना विरुद्ध-

## स्त्रियोऽपि स्त्रैणमवमन्यन्ते ॥ २८ ॥

---

माह नेति। स्त्रैणस्य सतत कामिन्यासक्तस्य स्त्रीजितस्य काम-किङ्करस्येति यावत्। तथाहि कामासक्तस्त्रैणोऽत्र क्षयात्मनो देहेन्द्रिय वैकल्यादीश्वराराधने प्रवृत्त्यभावाच्च धर्म्मकार्य्याभाव। स्वर्गावाप्ति स्वर्गप्राप्तिस्तल्लाभो न भवति। एव धर्म्मकार्य, प्रवृत्त्यभावात्तत्कार्य्यं तदनुष्ठान तत्फलञ्च न भवति। धर्म्मकार्य्यञ्च याग दान देवाराधन योग परोपकारा। क्वापि इद सूत्रद्वयं पृथगरूपेण विभक्त दृश्यते। परन्तु प्रयोजनाभावादर्थवैषम्या चैकमेव सूत्र युक्त शोभते। 'स्त्रैण स्त्र्यासक्त कामुकी लम्पटो रमणीरत'। स्त्रियामय समासक्त इति 'स्त्रीपुम्भ्याम्' इति नञ। कृत्यो विहिते कार्य्ये च कृत्या क्रियादिवौकसो' इति रभस। कृत्यमिति। 'कृञ शब' इत्यत्र चकारात् क्यप च भवति। यद्वा कृती च्छेदने। कृत्यते। 'ऋदुपधात्' इत्यादिना क्यप स्यात्। स्वर्गप्राप्तिर्धर्म्मकार्य्योपायादिकञ्च पुराणे धर्म्मशास्त्रे वर्णितमस्ति ॥ २७ ॥

स्त्रीपरायणस्य स्त्रीसन्निधेऽप्यवमानमाह स्त्रिय इति। स्त्रिय पतिव्रता योषित अन्या वा। स्त्रैण स्त्रीसेवारत पुमासम्। अवमन्यन्ते हीनमिवावजानन्ति। सच्चारित्राभावाच्छक्ति-राहित्याच्च। केचिद्वदन्ति 'तारुण्याभावाद् दु शीलत्वाच्चेति'। 'स्त्री योषिदबला योषा नारी सीमन्तिनी त्यमर। स्त्यायन्ति गर्भोऽस्याम। 'स्त्यायतेर्ड्रट्' इत्यौणादिक प्रत्यय। टिलोपो

## पुष्पार्थिनः सिञ्चन्ति अद्भिः पुष्पतरुम् ॥ २९ ॥
## अद्रव्य-प्रयत्नो बालुकापीडनादनन्यः ॥३०॥

---

समीपगः । 'टिड्ढा' इत्यादिना ङीप् । समर्थेष्वपि कामामला प्रयत्ना भवन्ति । दौर्बल्यादकर्मण्या अविषमस्तावेति ॥२८॥

कार्यसिद्धौ तद्योग्यसामग्रीसम्पादनमाह पुष्पार्थिन इति । पुष्पार्थिनः प्रसूनकामिनः पुरुषाः । अद्भिः सलिलैः सिञ्चन्ति तरुमूलदेशे आर्द्रीभूतं कुर्वन्ति तेन च पुष्पप्राचुर्यं स्यात् । पुष्पतरून् पुष्पितान् महीरुहान् । तरुतमूले सलिलसेकाद् यथाभिलाषं पुष्पाणि यथाकामं लब्धुं शक्नुवन्ति । क्वचिदेवं सूत्रपाठो दृश्यते 'न पुष्पार्थी सिञ्चति शुष्कतरुम्' एवं पाठे पुष्पार्थी जनः शुष्कतरुं न सिंचति । अपि तु जीवितमहीरुहं सिञ्चति । यस्य तस्य येन प्रयोजनसिद्धिर्भवति स तदर्थं यतते । प्रमादस्ते च तत् । तथा च दध्यर्थी धेनुसेवनं कृत्वा क्षीरमेव गृह्णाति न तु हयसेवनेन । 'पुष्पं प्रसूनं कुसुमं सुमनः' इत्यमरः । पुष्प विकसने, पुष्प्यति । ततः पचाद्यच् । तरुः । तॄ प्लवनतरणयोः, तरति । 'भृ मृ शीङ्' इत्यौणादिकसूत्रात् उः ॥२८॥

कार्यगौरव-सारवस्त्वनुसन्धानं प्रयोजनं तत्सम्पादनाय योग्यानुशीलनमाह अद्रव्येति । अद्रव्येषु असारवत्सु पदार्थेषु वा यः प्रयत्नः फलोत्पादनार्थं प्रवर्त्तनोद्यमः । स प्रयत्नः बालुकापीडना-द्बालुकानिष्पीडनादनन्य एव । यथा बालुकापीडनं निरर्थकम् ।

## न महाजन-हासः कर्त्तव्यः ॥ ३१ ॥

यथा तण्डुलार्थी तुषकण्डनं करोति तद्वत् । अन्यत्र 'वालुका-क्वाथनादनन्यः' इत्थं पाठभेदोऽस्ति । अत्र क्वाथनं क्वाथकरणम् । तत्तु निष्फलमित्यर्थः । 'द्रव्यं भव्ये गुणाश्रये' इत्यमरः । द्रव्यम् । द्रुरिव द्रुरिदं वा । 'द्रव्यञ्च भव्ये' इति साधुः । 'वालुका सिकताऽस्तु स्याद् वालुकं लेलवालुकं' इति मेदिनी । वल प्राणने, वाहुलकादुन् । स्वार्थे कन् । नात्र वालुकाख्य-गन्धद्रव्यमपि च सिकता । 'स्थाने नियोगः, सेवा शक्तिमतः, सारद्रव्ये च प्रयत्नः' इत्युचुः प्राचीनाः ॥ ३० ॥

अथ समीक्ष्यकारिजनस्योपहासकरण-निषेधमाह नेति । महान्तः श्रेष्ठाः पुरुषोत्तमा जना महाजनाः । महत्त्वञ्च विद्या-धनप्रतापादाद्यैर्धर्मैरिति ज्ञेयम् । तेषां हासः परिहासः उपेक्षा अनादृतिरिति यावत् । गरिष्ठेषु परिहासकरणे स्वीयमानमपि हीन-तामेतदिति, तथा सामाजिकेषु च । तस्य च तथैव भवने प्रवृत्तिरपि नश्यति साधुद्रोहश्च भवति । तदुक्तं कविना 'न केवलं यो महतोऽवभाषते' इत्यादि । एवं शास्त्रकृद्भिरपि 'न प्रतिबध्नाति हि श्रेयः पूज्य-पूजा-व्यतिक्रमः' इत्युक्तम् । तादृश-जनैर्महोपकारः सर्वेषां नत्वपकारः । अतः तान् प्रतिविगानं नैव कुर्यात् । 'तत्र हासो हास्यं घर्घरं हासिका स्त्रियाम्' इति शब्दार्णवः । अत्र हास उपहास इत्यर्थः । हसे हसने, हसनम् । घञा हास इति सिद्धः ॥ ३१ ॥

**न नर्म-परीहासः कर्त्तव्यः ॥ ३२ ॥**

**कार्य्य-सम्पदं निमित्तानि सूचयन्ति ॥३३॥**

---

सामान्यतः नर्म-परीहासावलम्बनेन समयातिपातकरण-निषेधमाह नेति । नर्म क्रीड़ा खेला, परिहेलनेन क्रीड़ा च । परीहासः उपहासः, उच्चकुहरा । प्राज्ञ-धर्मसत्कर्मस्वेषु । न कर्त्तव्यः नैव विधेयः । ईदृगाचरणे सद्भीरितिर्धीयते हास्यचापल-मनं स्यादिति भावः । तथा कवि-समयश्च 'परिहासविजल्पितं सखे ! परमार्थेन न गृह्यतां वचः' । परि सर्व्वथा ईष दुष्टहासः । अत्र नर्मपदेन सामान्यक्रीडामात्रग्रहणार्थैव पुनरुक्तिः । 'क्रीड़ा खेला च नर्म च' इत्यमरः । नॄ नये, नरणं नर्म । मनिन् प्रत्ययेन सिद्धम् । सूत्रमदः कश्चिन्मूलादर्शे नास्ति ॥ ३२ ॥

कार्य्यारम्भात् प्राक् शुभसूचक-दर्शनेन भाविकार्य्यस्य साफल्य-मासम्पादनभावमाह कार्य्येति । निमित्तानि कार्य्यात् प्राक् शुभ-सूचक-लक्षणानि । कार्य्यस्य कर्म्मणः सम्पदं सम्पत्तिम् ऋद्धिं सूचयन्ति प्रकाशयन्ति । निमित्तानि द्विविधानि । शुभ-निदानानि । अशुभ-निदानानि च । एतानि तु शाकुनशास्त्रे ज्योतिःशास्त्रे, योगशास्त्रे, वैद्यके, सामुद्रिके च वर्णितानि सन्ति । गीतायाञ्च—

"निमित्तानि च पश्यामि विपरीतानि केशव" ।

"निमित्तं शाकुनो हेतुः चिह्नञ्च शुभलक्षणम्" ॥

## नक्षत्रादि-निमित्तानि विशेषयन्ति ॥२४॥

इति व्याड़िरपि। 'सम्पत् समृद्धिः श्रीरे'ति।

'निमित्तं किञ्चिदासाद्य देही प्राणैर्विमुच्यते'।

इति पञ्चतन्त्रे। न्यायमते तु समवायिकारणा-समवायिकारणाभ्यां भिन्नं तृतीयं निमित्तकारणम्। ञि मिदा स्नेहने, निमेद्यति। औत: क्तः। संज्ञापूर्व्वकत्वान्न नत्वम्। 'अनात्मनेपद निमित्ते' इति निर्देशादेति माधुलसूक्तं व्याख्यासुधायाम् ॥ २३ ॥

कार्य्यारम्भात् प्राङ्-निमित्तसूचकहेतुमाह नक्षत्रादीति। नक्षत्रादि। अप्राकृताभिनवनक्षत्रदर्शनम्। आकाशे धूमकेतुः। मिलीन्ध्रावरणम्। साग्नि-धूमाङ्गारोद्गमः। ते आदयोर्येषां निमित्तानां, तानि निमित्तानि। कार्य्यानुष्ठानात्पूर्व्वं यादृग् निमित्तदर्शनं भाविकार्य्यफलं तादृगेवानुमेयम्। तानि परिणामसूचकानि विशेषयन्ति। विशिष्टत्वेन ज्ञापयन्ति। तद्यथा त्रिविधमद्भुतं दिव्यं नाभसं भौमञ्चेति। एवमद्भुतसागरे आथर्व्वनाद्भुतवचनम्। 'प्रकृतिविरुद्धमद्भुतमापदः। प्राक् प्रबोधाय देवाः सृजन्ती'ति। विष्णुधर्मोत्तरे भौमादिभेदेन फलतारतम्यमुक्तम्—

> "भौमं चाल्पफलं ज्ञेयं चिरेण परिपच्यते।
> नाभसं मध्यफलदं मध्यकाले फलप्रदम् ॥
> दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च"।

यन्मदं रघुनन्दनीये ज्योतिस्तत्त्वेऽद्भुतप्रकरणे संगृहीतमस्ति।

## न त्वरितस्य नक्षत्र-परीक्षा॥ ३५॥

---

शोकानामनिष्टकरत्वेनैतस्याशोभनः। तच्छान्तिविधानन्तु छन्दोगपरिशिष्टे शान्तिमयूखादौ च वर्णितमस्ति। 'निमित्तं हेतुलक्ष्मणोः' इत्यमरः। 'नक्षत्रादपीति' पाठभेदे, नक्षत्रपतनाद् धूलिपटलोद्गमाद् विपरीतनक्षत्रदर्शनाच्चेत्यर्थो बोध्यः॥ ३४॥

अनिर्दिष्टनक्षत्रस्थलमतेन नक्षत्रोदयगतिस्थितिपरीक्षादिकर्मसु अयोग्यतामाह नेति। त्वरितस्य क्षिप्रगामिनः पुंसः। यद्वा शीघ्रगामिनो नक्षत्रादेः। तेषां परीक्षा सम्यगीक्षणं न स्यात्। नक्षत्राणां शुभाशुभलक्षणं तद्विवेकः। अथवा कस्मिन् नक्षत्रे को वा ग्रहोऽस्ति। स कियन्तं कालं स्थित्वा ततोऽन्यत्र यास्यतीति। तेषां मध्ये कदाऽगस्त्योदयः, कदा वा वसिष्ठोदयः, कदा पुष्येण चन्द्रमसो योगः, कदा च चित्रायाः स्थानान्तरे गतिर्भवतीति ज्ञानमवश्यमाचार्येण सिद्धान्त-गणितशास्त्रीयोपायावलम्बनेन च सम्यगीक्षणं सम्भवति। अत्र भोजराजीय राजमृगाङ्कसन्दर्भे सिद्धान्तसन्दर्भे सिद्धान्त दर्पणादि प्रमाणम्। अतः स्पष्टमुक्तं तत्त्वविज्ञानगणितविज्ञानवता स्थिरमतेः परीक्षणेऽधिकार इति। 'त्वरितं वेग रहसः' इति हैमः। चित्रायाः गतिर्दीर्घकालेन। अन्येषान्तु क्षिप्रगतिः। 'नक्षत्रमृक्षं भं तारा' इत्यमरः। न क्षदते छिनत्ति। क्षदतेः सौत्रो धातुः हिंसार्थे। तत औणादिकत्वात् ष्ट्रन्। 'नभ्राणपात्' इत्यादिना प्रकृतिभावः॥ ३५॥

## परिचये दोषा न छाद्यन्ते ॥ ३६ ॥

## स्वयमशुद्धः परानाशङ्कते ॥ ३७ ॥

परिचये च दोषप्रकाशनमाह परीति। परिचये संस्तवे प्रकाशे वा तत्काले च, गुणादुल्लेखे दोषाः कलङ्काः गर्हिताचरणानीति यावत्। न छाद्यन्ते नाव्रियन्ते। तदानीं गुणा दोषाश्च प्रकाशिता स्युः अन्यथा यस्य तु परिचयस्तस्य सम्यक् परीक्षा नैव भवेत्। केचित्तु परिचयः परितस्सम्यग्गुणदोषादि विवरणप्रकाशः। तेन दोषाच्छादनेऽपि न परिचयो भवति। 'संस्तवः स्यात् परिचयः' इत्यमरः। परितस्सम्यक्चयनम्। विशेषेण ज्ञानम्। चिञ् चयने परिचीयते। परिपूर्व्वाच्चिनोतेरचा सिद्धम् ॥ ३६ ॥

सदोषस्य परदोषानुसन्धानमनौचित्यमाह स्वयमिति। स्वयं निजः आत्मनेति। अशुद्धो नानादोषान्वितः दुरितयुक्तो वा। अतः परानन्यान् लोकान् दोषयुक्तान् इत्याशङ्कते स्वदोषतौल्याय। तर्हि कथम् 'आत्मवत् सर्व्वभूतेषु यः पश्यति स पण्डितः। आत्मवत् मन्यते जगत्' इत्यादि सङ्गच्छते। सत्य तत्सर्व्वं गुणविषये सुखदुःखाद्यनुभवे च। न तु दोषविषये स्वदोषस्य परस्मिन्नपि आशङ्कनम्। यतः जगति सर्व्वे लोका नहि दुष्टाः साधवो वा भवन्ति। लोकानामुच्चावचत्वभावात्। केचन साधवः केऽपि दुष्टाश्च। परं सर्व्वेषु मैत्री करुणा मुदितोपेक्षा यथायोग्यं सम्भावनीया। 'स्वयमात्मने'त्यमरः। शुध-

स्वभावो दुरतिक्रमः ॥ ३८ ॥

---

शौचे, शुध्यति। ततः क्तप्रत्ययः। पयाचड् योगः। सु-सुष्ठु चयते चयगतावित्यस्माद्धातोरसा सिद्धम् ॥ ३७ ॥

वस्तुस्वभावस्यापरिहार्य्यत्वमाह स्वभाव इति। स्वस्यात्मनो भावः स्वभावः। यद्वा स्वो भावः प्रकृतिः स्वरूपं नैसर्गिकमिति यावत्। स च दुरतिक्रमः। दुःखेन महता प्रयासेनातिक्रमितुं शक्यः, तथैवाचमनोक्तिर्योग्या। तदुक्तम्—

"स्वभावो यादृशो यस्य न जहाति कदाचन"।

अन्यच्च कौटिल्यकृतम्—

"न हि स्वभावो भावानां व्यावर्त्यो तीष्णायद्दृवैः"।

सांख्यभाष्ये च—'स्वभावस्यानपायित्वाद् यावद्द्रव्य भावित्वा'-दिति। नीतिविद्भिरप्युक्तम्—

"स्वभाव एवात्र तथातिरिच्यते,

यथा प्रकृत्या मधुरं गवां पयः" इति।

यथा पयसि माधुर्य्यमिक्षुरसे च। निम्बे च तिक्ततेति। अतिक्रमणम्। अतिपूर्व्वात्क्रमेर्भावे ङञ्। अन्यविधो यथा—

"निसर्गश्च स्वरूपश्चेत्येषोऽपि भवति द्विधा।

निसर्गः सुदृढाभ्यास जन्यः संस्कार उच्यते॥

अजन्यस्तु स्वतः सिद्धः स्वरूपं भाव इष्यते"।

इत्युज्ज्वलनीलमणौ। भास्कराचार्य्यैश्च 'महत्त्वो

## अपराधानुरूपो दण्डः ॥ ३८ ॥

स्वभावतो यतो विचित्रा वत वस्तुशक्तयः' इत्याहुः। अन्यत्र 'वह्निर्हिमस्पर्शो च स्वभावोऽय प्रकीर्तितः' ॥ ३८ ॥

अपराधिषु यथायोग्यदण्डमाह अपेति। यस्य दण्ड्यस्य यादृशोऽपराधस्तस्य तदपराधानुरूपो दण्डो योग्यत्वेन विधेयः। न तु गुर्वपराधे लघुदण्डः। लघ्वपराधे गुरुदण्डो वा। अथवा निरपराधे दण्डः प्रयोज्यः। सापराधे दण्डाभावः। तेन समाजेषु दुर्नीतिः संवर्द्धते। एतत्सर्वम् अर्थशास्त्रविरुद्धं ज्ञेयम्। सर्वथा दण्डाभावे लोके मानवीयो मात्स्यन्यायः कदाचित् स्यात्। अराजकञ्च राष्ट्रं भविष्यति। अतो दण्डः प्रजारक्षणे तत् स्थितौ सुशासने चातिप्रयोजनार्हः। उक्तञ्च मनुना—

"अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चाधिगच्छति" ॥

नीतिविद्भिश्च दण्डत्रैविध्यमुक्तम्—

"वधोऽर्थग्रहणञ्चैव परिक्लेशस्तथैव च।
इति दण्डविधानज्ञैः दण्डोऽपि त्रिविधः स्मृतः" ॥

परिक्लेशो बन्धन-ताडनादिः। तत्रैव—

"दण्डः सुप्तेषु जागर्त्ति दण्डः संरक्षति प्रजाः"।

इति च। अन्यदर्थशास्त्रे, शुक्रिकल्पतरौ, भार्गवनीतौ, भारते राजधर्मे चास्ति। राध संसिद्धौ, अपराधनमपराधः। ततो घञ् सिद्धः। दमु उपशमे, दमनं दण्डः. अमन्तात् डः ॥३८॥

## कथानुरूपं प्रतिवचनम् ॥ ४० ॥

## विभवानुरूपमाभरणम् ॥ ४१ ॥

---

प्रश्नानुसारेणैव प्रत्युक्तेः प्रयोजनमाह कथेति । कथायाः जिज्ञासोर्वाक्यस्य प्रश्नस्येति यावत् । अनुरूपं यस्य यादृक् कथनं तस्य तादृशेव प्रतिवचनम्, प्रतिवाक्यमुत्तरमिति अन्यथैकं पृष्टम् अन्यदुत्तरमिति स्यात् । तदाऽयशोविप्रतिपत्तिर्धिक्कृतता च भवेत् । 'आम्रान् पृष्टः कोविदारानाचष्टे' इति प्रश्न प्रतिवचनयो वैरूप्यं अपोत्तरत्वं स्यात् । तथैव विचारालये न्यायाधीशस्य प्रश्नानुरूपमेवोत्तरं देयम् । अन्यथोत्तरे गाप्याद् दण्डार्हो भवेत् । नात्र कथा कादम्बर्यादिः । अपि च वाक्यप्रबन्धमेव । अन्ये तु 'प्रबन्ध-कल्पना कथा' इति प्रबन्धेन प्रबन्धस्य वा कल्पना रचना यस्यां सा स्तोकसत्या कथा । तथा चोक्तम्—

"प्रबन्ध-कल्पनां स्तोक-सत्यां प्राज्ञाः कथां विदुः ।
परम्पराश्रया या स्यात् सा मताख्यायिका क्वचित्" ॥

इत्याहुः । अत्र तस्य सम्यग् नोपयोगित्वम् । कथ वाक्यप्रबन्धने, कथनम् । 'चिन्ति पूजि कथि' इत्यादिना अङ् । 'प्रतिवाक्योत्तरे समे' इत्यमरः । वच भाषणे, वचनम् । प्रतिपूर्वाद् वचेर्ल्युट् ॥ ४० ॥

धनानुसारेणालङ्कारादि-संग्रहो विधेयः नाधिक इति तदाश्रीति । विभवस्य धनस्य ऐश्वर्यस्येति यावत् । अनुरूपं सदृश-

## कुलानुरूपं वृत्तम् ॥ ४२ ॥

---

मुल्यमिति । आभरणं विभूषणमलङ्कारः । यस्य तु यादृग्-धनं विद्यते तदनुयायि आभरणं संग्राह्यं नाधिकं नवापि न्यूनम् । तदधिकसंग्रहे धनाभावादव-वस्त्राभावो भवतीति भावः । अल्पसंग्रहे गौरवहीनता चेति । 'वर्षे दै विभवा अपि' इत्यमरः । 'विभवो धनमैश्वर्यो'रिति हैमश्च । विभवति । विपूर्वाद्भवतेः अप् । आभ्रियतेऽनेनेति । भृञ् भरणे, आङ्पूर्वात् करणे, ततो ल्युट् । कटक-केयूर-काञ्चन-अवक-कुण्डल-काञ्ची-हारावतंस-वलयाङ्गद-नुपुर-ग्रैवेयक-ताटङ्कादीन्याभरणानि ॥ ४१ ॥

वृत्तस्य कुलानुरूपत्वमाह कुलेति । कुलं वंशोऽभिजन इति तस्यानुरूपं सदृशं वृत्तं चरित्राद्याचरणञ्च स्यादिति । यदि च कुलं विशालं प्राचीनं भवेत्तदा तस्य कथा तु विशाला नाना तत्त्वपूर्णा । कुलस्य गुणोदोषावपि तादृशावेव । प्रशस्तकुलसम्भूतस्याचरणादिकमपि सर्वं प्रशस्तं वैशद्ययुक्तम् । हीनकुलजातस्याचरणं निकृष्टमिति । वृत्तञ्च तथैव प्रायो भवति । 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च' इति मेदिनी । कौ लीयते, लीङ् श्लेषणे । 'अन्येभ्योऽपि चेति' डः । यद्वा कुङ् शब्दे कूयते । बाहुलकात्लक् । 'वृत्तं हत्ती मृते दृढे चरित्रे' इति हैमः । 'वृत्तोऽन्यलिङ्गं' वा क्लीबे छन्दत्यारिवृत्तयोः' इति मेदिन्यपि । वित्तमिति पाठे कुलानुरूपं धनमित्यर्थः ॥ ४२ ॥

**कार्य्यानुरूपः प्रयत्नः ॥ ४३ ॥**

**पात्रानुरूपं दानम् ॥ ४४ ॥**

---

प्रयत्नस्य कार्य्यतुल्यत्वमाह कार्य्येति । कार्य्यस्य कर्म्मणः अनुष्ठेय विषयस्येति । अनुरूपः सदृश इति । प्रकृष्टो यत्नश्चेष्टा समुद्योगश्चेति यावत् । यादृशं कार्य्यं गुरु लघु वा । तादृश-मेव सामग्रीसमवधानम् । साधनोद्योगः कार्य्यसम्पादनञ्च तत्-फलमपि तथैव भवति । कार्य्यं स्वयमनुष्ठेयम् अन्यद्वारा वा, सदसद्वा, स्वार्थं परार्थं वा । सम्प्रति काले भविष्यति वा अनुष्ठेयम् । चिरकरमचिरकरं वा । एतत् सर्व्वं कार्य्यानुष्ठानात् प्राक् तत्-समकाले वा परिचिन्तनीयम् । अनुः सादृश्यार्थे । रूप, रूप-करणे, इति चौरादिका दच् । न्यायनये तु प्रयत्नस्त्रिविधः । स यथा—

"प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ।
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम् ॥
चिकीर्षा कृतिसाध्येष्ट-साधनत्वमतिस्तथा ।
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ॥
निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः ।
यत्नो जीवनयोनिस्तु सर्व्वदातीन्द्रियो भवेत् ॥
शरीरे प्राणसञ्चारे कारणन्तत् प्रकीर्त्तितम्" ।

इति विश्वनाथाः । प्र पूर्व्वाद् यत् धातोर्भावे नङ् ॥ ४३ ॥

यादृशं पात्रं परिदृष्टं दानमपि तादृशमेव विधेयमि-

## वयोऽनुरूपो वेशः ॥ ४५ ॥

---

पात्रेति । दानं विश्राणनं त्यागः । तच्च स्व स्वत्वध्वंसपूर्व्वकपरस्व-त्वापादानं वेति । तत् पात्रानुरूपं युक्तम् । एवमुत्तममध्यमाधम-भेदेन पात्रं त्रिविधम् । यो यादृशः पात्रन्तस्मै विद्यागुणवयो-वस्थाः अवलोक्य तादृगेव धनादिकं देयम् । तदुक्तं भारते—

"दरिद्रान् भर कौन्तेय ! मा प्रयच्छेश्वरे धनम्" ।

अपरञ्च—

"दरिद्रे दीयते दानं सफलं पाण्डुनन्दन !" ।

दानस्य धर्म्माङ्गत्वं श्रुतावप्युक्तम् 'त्रयोधर्म्मस्कन्धा यज्ञोऽध्ययनं दान'ञ्चेति । गीतायाञ्च—

"दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे तद्दानं सात्त्विकं स्मृतम्" ॥

अतो दीनातुरानाथ-पङ्ग्वन्ध-विपन्न-विद्यार्थि-देव-द्विज-गुरु-विद्वद्भ्यो यथाशक्ति विभवानुसारेण धनं देयम् । दानपात्रन्तु धर्म्मशास्त्रादौ कीर्त्तितं, नेह प्रतन्यते विस्तरभिया । 'पात्रन्तु भाजने योग्ये स्रुवादौ राजमन्त्रिणि' इति मेदिनी । पात्रम् । पा रक्षणे, पाति अनेन । पा पाने वा, पिबति । तत्र औणादिक-सूत्रात् ष्ट्रन् । 'अर्थानुरूपमिति' पाठे तु सूत्रार्थोऽक्लिष्ट एव ॥४४॥

यस्य तु यादृशं वयस्तस्य तादृशमेव वेशधारणं शोभनन्तदाह वय इति । वयांसि बाल्य-यौवन-वार्द्धक्यानि । तानि च शरीरा-वस्था विशेषाः, जीवनकालो वा । तेषामनुरूपं तुल्यं वेशः ।

## भर्त्तृ-वशवर्त्तिनी भार्य्या ॥ ४७ ॥

---

पत्न्याः पत्युरनुगामित्वमाह भर्त्तृति । भर्त्तुः पत्युः स्वामिनः इति । वशवर्त्तिनी । वशे आनुगत्ये वर्त्तितुमवस्थातुं शीलमस्याः इति । पत्यनुगामिनी भार्य्या पत्नी स्यात्, सा तु गृहपिञ्जर-कोकिला कुलस्त्रीति । उक्तञ्च राजनीतौ—

"सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा ।
सा भार्य्या या पतिप्राणा सा भार्य्या या प्रजावती ॥
साध्वी सु-शीलसम्पन्ना सुरूपा च गुणान्विता ।
देवाग्नि-गुरु-भक्ता या सा भार्य्या भोगमोक्षदा" ॥

पतिप्राणा सम्यक् पतिव्रता इत्यर्थः । मनुना च—

"आर्त्तार्त्ते मुदिता हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता" ॥

सद्विद्या चासां हितकारिणी । तथा च—

"कन्याप्येवं पालनीया शिक्षणीयापि यत्नतः" ।

अन्यच्च तासां वसन-भूषण-मैलवव्यवहारैश्च परितोषणं युक्तम् । अपि शास्त्रे गृहिण्या च गृहपतेः गृहित्वमुक्तम् । तथा च—

"न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" ।

एवञ्च—"अर्द्धं भार्य्या शरीरस्य भार्य्याभीष्टतमा मता ।
भार्य्या मूलं त्रिवर्गस्य भार्य्याऽभिवेऽपि नश्यति" ॥

'भर्त्तृवशानुवर्त्तिनीति' पाठे तु अर्थाभेद-प्रतीतिः । ङु-भृञ्

## गुरु-वशानुवर्त्ती शिष्यः ॥ ४८ ॥

भरणादौ, विभर्त्ति। ततः तृचा भर्त्तेति। भार्य्या। भृञ् भरणादौ। भ्रियते, भूर्य्यते वा। क्यपा सिद्धम् ॥ ४७ ॥

शिष्यस्य गुरुवशानुयायित्वमाह गुर्व्विति। गुरुः ज्ञाननिषेकयोर्दाताचार्य्यः दीक्षयितेति यावत्। तस्यानुवर्त्ती अनुगामी अनुसर्त्तेति। य ईदृशः स्यात् स शिष्यः। स चान्तेवासी ब्रह्मचारीति। यस्तु दुर्विनीतो गुरुविरोधी न सः शिष्यः स्यात्। गुरुश्च शान्तः शास्त्रविद्धर्म्मज्ञो दयालुः शीलवान् प्रतिभान्वितो भवेत्। शिष्यस्य गुरुवशित्वे विद्या-सौशील्य-नीति-नैपुण्य-ज्ञानान्यनायाससाध्यानि स्युः। तदुक्तमाचार्य्यैः—

"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्ये'ति।

धर्म्मशास्त्रग्रन्थे तु—

"निषेकादीनि कर्म्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते' ॥ इति
"गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि।
पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि" ॥

इति मेदिनी। गॄ निगरणे, गॄ शब्दे च। गिरति गृणाति च धर्म्मादि। एतयोः 'कृग्रोरुच्चेति' औणादिकसूत्रादुः। 'शासु अनुशिष्टौ, शिष्यते। 'एतिस्तु शास' इति क्यप्। 'शास इदङ्हलो इतीत्'। 'शासि वसि' इत्यादिना ष इति ॥ ४८ ॥

**स्नेहवतः स्वल्पोऽपि रोषः ॥ ५२ ॥**

**आत्मच्छिद्रं न पश्यति परच्छिद्रमेव बालिशः ॥ ५३ ॥**

---

इत्यादिना साधुः। बाल इति। बल सञ्चलने, बलति, बलते वा। घञा सिद्धः। यद्वा ज्वलादिसूत्रात् णः ॥ ५१ ॥

वात्सल्ययुक्तस्य कोपः अल्पीयान् भवति स नाहिताय तदाह स्नेहवतेति। स्नेहवतः वात्सल्यवतो दयायोग्यस्येति। तादृशस्य पुंसः। रोषः कोप, क्रोधश्चेति। अपि निश्चितं स्वल्पः अल्पस्पः क्षणस्थायी भवति। तस्य स्नेहस्वभावत्वात् स्नेह एवाधिकः स्यात्। क्षतेऽपि रोषे न प्रातिकूल्यं भवेत्। 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः। अन्यच्च—'कारुणिकी वत्सलश्च स्निग्धः स्नेहपरायणः'। ष्णिह प्रीतौ, स्नेहनम्। स्नेह इति घञा सिद्धः। रुषः हिंसायां, रोषः। तत्र भावे घञ् ॥ ५२ ॥

मूढजनस्य केवलं परच्छिद्रान्वेषणे तत्परत्वमाह आत्मेति। आत्मनः स्वस्य निजस्येति। छिद्रं दोषः अपराध इति। यद्वा छिद्रं कार्यदोषः। बालिशो मूर्खः इति। न पश्यति नावलोकयति। परस्यान्यस्य छिद्रं दोषपरमहिताचरणाय पश्यति। हिताहितविषये विवेकशक्तिहानात् स्वदोषमाच्छाद्य परदोषं प्रकटयति प्रायेणाज्ञः। तदुक्तं विद्भिः—

> "नीचः सर्षपमात्राणि परच्छिद्राणि पश्यति।
> आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति" ॥

## सोपचारः कैतवः ॥ ५४ ॥

दण्डिनापि—

"गुणदोषानशास्त्रज्ञः कथं विभजते जनः।
किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु" ॥

कविसमयश्च—

"अभावयन्नेव निजोक्ति-दोषा-
नन्योक्ति दोषान् वदतो करोति।
असुन्दराङ्गोऽयमिति ब्रुवाणः,
काणोऽपि हास्यास्पदतामुपैति" ॥ इति।

'वाग्मिस्तु गिरौ सूर्ये' इति मेदिनी। 'परच्छिद्रमेव पश्यति वाग्मिन' इति पाठान्तरमस्ति, तेन नार्थभेदः। छिद्र भेदने, ततो घञ्। यद्वा छिदिर् द्वैधीकरणे, छिद्रार्ते। 'स्फायि तञ्चि' इत्यादिना रक्। प्राङ निरुक्तमन्यत् ॥ ५३ ॥

धूर्त्ततायाः उपचारपूर्वकत्वमाह स इति। कैतवः शाठ्यं कापट्यमतिचातुर्य्यमिति यावत्। उपचारेण कमनीयवस्तुना सेवनम्। यद्वा कान्येन वस्तुना सह इति शेषम्। उपचारः सेवापरितोषयोरुपकरणम्। अन्ये तु 'निग्रहः सेवा व्यवहारः उत्कोच' इत्याहुः। तेन सह वर्त्तमानः सोपचारः। कैतवः प्रायेण तादृश एव स्यात्। 'कितवो धूर्त्तवञ्चके वञ्चके कन-काह्वये' इति विश्वः। 'कैतवन्तु छले द्यूते कैतवे कितवे त्रिषो' इति मेदिन्यपि। कितं वायति, वो वै शोषणे, कितवे वातीति वा।

काम्यैर्विशेषैरुपचरणमुपचारः ॥ ५५ ॥

अत्युपचारः शङ्कितव्यः ॥ ५६ ॥

---

शा गति गन्धनयोः । अनयोः 'आतोऽनुप' इत्यादिना कः । कितवस्य कर्म्म कैतवम् । 'युवादित्वादण्' । धूर्त्तेन मधुरवाचा रमणीयवस्तु प्रदर्शनेन च स्वकार्य्यसाधनं क्रियत इति भावः । 'नोपचारः कैतवः' इत्यपि पाठान्तरमस्ति । यत् कैतवं तदुपचारेण सञ्चितं न भवति । परम सत् सुकरार्थं सूत्रम् ॥ ५४ ॥

स्तोकोपचारशब्दं विशदयन्नाह काम्यैरिति । काम्यैः कामनान्वितवस्तुभिः यदुपचरणं लोकाना परितुष्टये स्वकार्य्यसाधनाय वा सेवनं तदुपचारः । तेनोपचारेण कितवः धूर्त्तताम् अभिव्यज्य कार्य्यं निष्पादयति । यत्किञ्चित् फलमुद्दिश्य कायिकं कर्म्म क्रियते तत्काम्यम् । अन्यत्र च—

"काम्यन्तु कामनायुक्तं यत्कर्म्म कायिकं नरः ।
करोति फलसिद्ध्यर्थं तत्काम्यं परिकीर्त्तितम्" ।
"यद् यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्" ।

इति ग्रन्थान्तरे च । कमु कान्तौ, काम्यते इत्यतो 'ऽचोयत्' । यद्वा कामोऽस्ति यवेत्यन्यत्रापीत्यादिना यप् । सूत्रमिदं पूर्व्वस्य वैषम्यकारणभूतमिवाभाति । उपचारः । चर गतौ, उपपूर्व्वाच्चरतेर्घञ् ॥ ५५ ॥

प्रभूतोपचारस्य सन्देहजनकत्वमाह अत्विति । अत्युपचारः समधिक-कार्य्य-साधक-लोभनीय-सामग्री । स परिमाणाधिक्यात्

## चिर-परिचितानां त्यागो दुष्करः ॥ ५७ ॥
## श्वः सहस्रादद्य काकिनी श्रेयसी ॥ ५८ ॥

---

शङ्कितव्यः। अन्द्रेऽपार्थः आयङ्कनीयः 'अति सर्व्वत्र वर्ज्जये'-दिति नीतिज्ञा आहुः। 'सर्व्वमत्यन्तगर्हित'मिति च प्रोचुः प्राचीनाः। अतिप्रियमादधिकोपचारदर्शनेन तदा तेनापि प्रति शङ्कैव बलवती स्यात्। चिरपरिचितानामपि प्रचुरोपचारः शङ्कोद्रेके हेतुः। उपपूर्व्वाच्चरतेः घञ्। सुगममन्यत् ॥ ५६ ॥

सुदीर्घकालपरिज्ञातजनानां महत्तोपचाराणाञ्च परिहारे दुष्करत्वमाह चिरेति। चिरपरिचितानां सुदीर्घकालज्ञातानां कार्य्ये त्यागो दुष्करः। यद्वा महत्तोपचाराणां परिहारो दुर्घटः। ये तु चिरपरिचितास्ते कार्य्योऽवश्यमतिष्ठन्ते। अतस्तेषां त्यागो-ऽपरिहार्य्यः। तत्र सूक्ष्मरीत्या विचिन्त्य कार्य्यं विधेयम्। कुत्रचिदादर्शे पूर्व्वसूत्रे 'चिरपरिचितानाम् अत्युपचारः शङ्कितव्यः' इत्थं पाठोऽस्ति। तदात्वे सुगमार्थं सूत्रम्। परिपूर्व्वात् 'चिञ् चयने' इत्यस्मान्निष्ठीतिः क्तः। दुरुपसर्गात् करोतेः 'ईषद्दुःसु' इत्यादिना खल् प्रत्ययः ॥ ५७ ॥

प्रत्यक्षतोऽल्पलाभापेक्षया भविष्यदनुमेयबहुलाभो न श्रेयानिति दर्शयन्नाह श्व इति। श्वः अनागतेऽह्नि आगामिनि दिवस इति। सहस्रात्। सहस्रसंख्यककार्य्यकरणादद्य स्वल्पमपि करणं युक्तम्। भविष्यतोऽनुपस्थितेः। वर्त्तमानस्य च करायत्तत्वात्। यदा सम्प्रतिकाले स्वल्पलाभोऽप्यधिको मन्यते। भवि-

## श्वो मयूराद्द्य कपोतो वरः ॥ ५८ ॥

---

ष्यति काले विपुललाभात् । यद्यस्मिन् समये काकिनी पणस्य तुर्य्यभागः । सा आलभ्यः । तस्मात् सहस्रं काले भविष्यति न साम्प्रतम् । काकिन्युक्ता लीलावत्याम्—

'वराटकानां दशकद्वयं यत् सा काकिनी ताश्च पणश्चतस्रः' ।

सा तु श्रेयसी प्रशस्ता भवति । अन्यच्च—

"पणमाषकयोस्तुर्य्ये वर्त्तमानस्य काकिनी" ।

इति रुद्रः । तथैव रभसोऽपि—

"पणोदमानगण्डानां तुर्य्यांशेऽपि च काकिनी" ।

कर्म्मनिपुणाः प्रोचुः । 'आगामिनि कर्त्तव्यं श्वस्तदद्य कर्त्तव्य'-मिति । तथाहि—

"श्वः कार्य्यमद्य कुर्व्वीत पूर्व्वाह्णे चापराह्णिकम् ।
नहि प्रतीक्षते मृत्युः कृतमस्य नवा कृतम्" ॥

अन्यत्र पाठान्तरमेवमस्ति 'गौर्दुष्करा श्वसहस्रादेकाकिनी श्रेयसी' । श्वः सहस्रसारमेयेभ्यः एकैव गौर्धेनुर्दुष्टा अद्यापि श्रेयसी श्रेष्ठा भवति । यद्वा दुष्करा श्वसहस्रादेकापि गौः प्रशस्ता स्यात् । श्व इति । आगामि दिनम् । अन्हः पृषोदरादित्वात् साधुः । काकिनी । कक लौल्ये, ककनं काकः । घञा सिद्धा । अण शब्दे, काकमणति । ततोऽणा पृषोदरादित्वाच्च साधुः । अतिशयेन प्रशस्ता, 'प्रशस्य श्रः' । स्त्रियां ङीप् ॥ ५८ ॥

पूर्व्वश्लोकोदाहरणमुखेन तद् स्पष्टीकरणमाह श्व इति । श्वः

अतिसङ्गी दोषमुत्पादयति ॥ ६० ॥

श्वागामिनि दिवसे। अद्य वर्त्तमानाह्नि। मयूरात् शिखिनः। कपोतः पारावतः कलरव इति। वरः श्रेष्ठः श्रेयानिति। श्वो भविष्यति किमपि भवति नैव वा भवति अनागतत्वेनानिश्चितत्वात्। अद्य यद् भवति तत्करायत्तं समक्षमिति। अत उपस्थितं स्वल्पं श्रेयः, अनागतं अधिकमपि सन्दिग्धत्वेन नोपादेयमिति भावः। सन्निहितलाभं अतिदूरगमनं विहितः परिहार्य्यश्चेति। एवमेतत् कामसूत्रेऽप्य दृश्यते। तथा च कामसूत्रे द्वितीयाध्याये 'वरमद्य कपोतः श्वो मयूरात्' इति। अनयोः कामसूत्र-चाणक्य-सूत्रयोः पौर्व्वापर्य्यं चिन्त्यम्। 'मयूर शिखिनौ बर्हौ। मयूरे कुक्कुटे पुंसि शिखावत्यग्निकेतुः' इति मेदिनी। मय गतौ, मयते। खर्जूरादित्वादूरः। यद्वा रु शब्दे, मह्यां रौतीति 'अन्येभ्योऽपि दृश्यते' इति डः। कपोत इति। तत, पूर्वो दरादि। 'पारावतः कलरवः कपोतः' इत्यमरः। कस्य वायोः पोत इव, को वायुः पोतो नौरिवास्य वेति ॥ ५९ ॥

अविचारेण बहुसङ्गकरणं कार्य्यहानेः सन्देहायविधत्ति अतीति। अतिसङ्गी लोकैः सार्द्धम् अत्यासक्तिः सम्मेलनम्। येन केनापि यत्र तत्र सङ्गतिः। दोषम्, आर्थिकं शारीरिकमैन्द्रियिकञ्चानिष्टं समुत्पादयति जनयतीत्यर्थः। यथातिसङ्गो दोषप्रदः तथा कालक्षयकरः कार्य्यहानिकरश्च तथा हीनसङ्गोऽपि महाऽहितकरः। तथा च कापिलं सूत्रं 'बहुभिः सङ्गो न कार्य्यः

## सर्व्वं जयति अक्रोधः ॥ ६१ ॥

कुमारी कङ्कनवत्'। अत्रार्थे पौराणश्च 'वासे बहूनां कलहो भवेद्वार्त्ता द्वयोरपीति'। हीनसङ्ग निषेधमाह नीतिज्ञः—

"लघुसङ्गेन राजेन्द्र ! लघुतामेति निश्चितम् ।

यथा शुष्कतृणालम्बी लोष्टो हि प्लवते जले" ॥ इति ।

अपरञ्च 'भुजङ्गव्याप्तो वसति गरलं चन्दनरसः' इति च। यश्च कर्मण्यो मतिमान् बहुकार्य्यव्यासक्तस्तस्य कार्य्यानुरोधाद् बहु-सङ्गोऽपि सङ्गी वा दोषाय यथा वणिज इति रहस्यम्। 'मैलने सङ्गसङ्गमौ' इत्यमरः। ष्वञ्ज सङ्गे, सञ्जनम्। ततो घञा सिद्धः ॥ ६० ॥

'', कोपहीनस्य मतिमतः सकलक्रोधविषये जयमाह सर्व्व-मिति। सर्व्वं सकललोकं कार्य्यं वा। अक्रोधो रागहीनः। विनीतः सुशील इति यावत्। जयति अतिक्रम्य गच्छति। तेन विपदुत्तीर्णोऽपि भवति। क्रोधस्य विनाशसूत्रं—

"क्रोधाद्दुर्य्योधनो नष्टः क्रोधान्नष्टो हि रावणः।

शिशुपालस्तथा क्रोधाद् विनष्टो मधुकैटभः" ॥

गीतायाञ्च—

"काम एषः क्रोध एष रजोगुण-समुद्भवः।

महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्" ॥

अक्रोधात्शीलं वर्द्धते। तेन शीलेन लोकं वशीकुर्य्यादिति सर्व्व-मित्यस्य भावार्थः। 'वीतराग-जन्मादर्शनात्' इति न्यायसूत्रम्।

मतिमुत्तिष्ठन् जयति ॥ ६२ ॥

यद्यपकारिणि कोपः कोपे कोप एव कर्त्तव्यः ॥ ६३ ॥

---

सम्यक् त्यक्तरागस्य जन्मापि न भवतीति सूत्रार्थः। तेन विषयेषु सम्यक् क्रोधाभावाभावविशिष्टस्य जन्माभावोऽपि सूच्यते। 'क्रोधो भामः क्रुधा रुषा' इति शब्दार्णवः। तस्मात्सर्वैर्विगतक्रोधेन भाव्यम्। क्रुध कोपे, क्रोधनम्। ततो भावे घञ् ॥ ६१ ॥

क्रोधविरहितस्यान्यकार्य्यमाह मतिमिति। मतिम् सद्-बुद्धिम्। उत्तिष्ठन् विद्या-धनार्जनादौ उद्गच्छन् पुमान् जयति। यद्वा मतिं कोपाभिमुखगामिनीं बुद्धिमभ्युत्तिष्ठन् जनो जयति तामभिभवति क्रोधाभावादित्यर्थः। अनेन पूर्व्वसूत्रस्य रहस्यं व्यज्यते। 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः। सूत्रमिदं चादर्शान्तरे नास्ति। मन ज्ञाने, मन्यते अनया, मननं वेति क्तिन् ॥ ६२ ॥

अनिष्टाचरणशीलस्य सद्दर्शनेन तस्य महानिष्टसाधने निषेध-माह यदीति। यद्यप्यपकारिणि पुरुषे अनिष्टकारके जने दृश्यते कोपः। तदा तादृशे कोपयुक्ते पुंसि। कोप एव क्रोध एव कर्त्तव्यः। नाधिकस्ताडो व्याघातः प्राणहानादिः। तदा लघ्वपराधे गुरुदण्डः स्यात्। तथाच कृते प्रतिकृतिं कुर्य्या-

मतिमत्सु मूर्खमित्रगुरुवल्लभेषु विवादो न कर्त्तव्यः ॥ ६४ ॥

नास्त्यपिशाचमैश्वर्य्यम् ॥ ६५ ॥

---

द्विषिसि प्रतिहिंसनम्' इति। यद्वा कोपोऽस्यास्तीति अर्शआदित्वादच्। कोपे तत्पुरुष-पुरुषे इति। 'कोप क्रोधामर्षरोषप्रतिघाः' इत्यमरः। द्वेषोऽनिष्टापमान-दुःखा-चित्तोज्ज्वलनं कोपः। कुप क्रोधे, कुप्यति। ततो भावे घञ् ॥ ६२ ॥

, श्रेष्ठैर्जनैश्च सार्द्धं विवादकरणनिषेधमाह मतीति। मतिमत्सु धीमत्-कुशलेषु। एवं मूर्खोऽज्ञो मूढ इति। मित्रं सुहृत्सखिरिति। गुरुराचार्य्यः श्रेष्ठ-जनः। वल्लभः प्रभुः स्वामी। एषु जनेषु। विवादो विरोधः कलहो न कर्त्तव्यः। यद्वा मतिमत्सु मूर्खादिष्विति बोध्यम्। साकमेभिः कृते विवादे शिष्टाचारलङ्घनम् अनिष्टापातः, पराजयो गौरवहानश्चावश्यभावीति। 'मतिर्ज्ञानमभिप्रायः धीः प्रज्ञा बुद्धिरित्यपि' इति। 'वल्लभो दयितेऽध्यक्षे सल्लक्षण तुरङ्गमे' इति विश्वः। वल्ल संवरणे, वल्लते वल्लाते च। 'रासिवल्लिभ्याञ्च' इत्यभच। अन्यत् प्रागुक्तमिति ॥ ६४ ॥

ऐश्वर्य्यस्य तामसिकभावयुक्तत्वमाह नेति। अपैशाचम् अतामसिकं सत्वान्वितम्। ऐश्वर्य्यं वैभवमतुलसम्पदास्ति। यद्यपि यत्र धनादेः प्राचुर्य्यं लाभे अर्जने च तत्र क्रोध-काम-

## नास्ति धनवतां कर्म्मसु श्रमः ॥ ६६ ॥

---

कार्पण्यादि-व्यवहार-वैलक्षण्यं नियतमिति । ऐश्वर्य्यस्य माधुर्य्यं चास्ति लोभक्रोधाभिमानानामुद्दीप्तत्वं तद्वैगुण्यञ्च । विभवे सति तदिदृशो जगति दुर्लभः । कामादीनामनीशत्वे परमश्रेष्ठिको शान्तिः परत्र परमा निर्वृतिश्च सम्भवति । प्रभुत्व-बहुमैत्रत्व-निग्रहकारित्वादीनि केचनैश्वर्य्यपदेन व्यवहरन्ति । ईश्वरस्य प्रभोर्भावः शक्तिविशेषोऽलौकिको शक्तिर्वा । 'गुणवचन' इत्यादिना ईश्वरशब्दात् ष्यञ् । पिशाचः । पश भोजने । पिशितमश्नातीति कर्मण्यण् । ततः पृषोदरादि । तामस्यमध्योऽयं निर्देशः । भावप्रधाननिर्देशात् । पिशाचत्वम् । तत्शून्यमैश्वर्य्यं नास्ति । 'नास्त्यविशाचमैश्वर्य्य'मिति पाठभेदोऽस्ति, तेनैश्वर्य्यमविशाचमित्यर्थं नास्ति तत् पुष्कलमेवास्तीत्यर्थः ॥ ६५ ॥

धनिनां कर्म्मसु श्रमाभावमाह नेति । धनवतां धनिनां वैभवान्वितानाम् । कर्म्मस्वनुष्ठेय-स्वपरकार्य्येषु । श्रमः क्लेशः-देहेन्द्रियमनसामवसादजनकव्यापारः । नास्ति न विद्यते । यद्यपि जना धनवितरणपूर्व्वकं स्वयं कर्म्मकरैः सर्व्वमेव कार्य्यं स्वपरहितसाधं नियतं सम्पादयन्ति । कुतो धनिनां श्रमः क्लेशः कष्टं श्रमो ग्लानं तथा घर्म्मांक्तकलेवरोऽपीति' वोपालितः । श्रमेर्हलपीति घञ् । कर्म्मेति । डु कृञ् करणे, क्रियते । 'कृञो भावे कर्म्मणि च मनिन्' इत्यौणादिकमनिन् । 'कर्म्म

## नास्ति यानवतां गतिश्रमः ॥ ६७ ॥

---

क्रियायास्त्वे'ति रुद्रः। 'नास्ति धनवतां सुकर्म्मसु श्रमः' इत्थं सूत्रपाठे सुगमार्थं तद्बोध्यम्। दीनानान्तु श्रमः सर्व्वकर्म्मसु। धनिनां तेषु सर्व्वमक्लेशकरम् ॥ ६६ ॥

शकटवतां मार्गश्रमाभावमाह नेति। यानवतां शकट-शिविका-पोतादिमतां जनानाम्। गतिर्गमनम्। तत्र श्रमः क्लेशो नास्ति। यानवन्तो हि तत्तद् यानमारुह्य जले स्थले नभोमण्डलेऽनायासेन यान्ति। अतस्तेषां गमने श्रमाभावः। यानानि सपद-निष्पद-जलग-स्थलग-नभोगभेदेन बहूनि सन्ति। तथा च कामसूत्रव्याख्याने यशोधरीयेऽप्येवमुक्तम्। 'सजीवानां निर्जीवानां यन्त्राणां यानोदकसङ्ग्रामार्थं घटनाशास्त्रं विश्व-कर्म्मभिः प्रोक्तम्'। तत्र सजीवानि शिविकाश्वगोमहिषाजोष्ट्र-शकटादीनि। द्विपद निष्पद-यानविषये युक्तिकल्पतरौ वर्णित-मस्ति। पुष्पकविषयस्तु श्रीभोजराजीयसमराङ्गन सूत्रधारे सम्यग् वर्णितोऽस्ति। विश्वकर्म्म-प्रोक्तं वायु-पारदादि परिचालितं यन्त्र-दिदानीं नोपलभ्यते।

"जलगं स्थलगं यानं याप्ययानन्तथैव च"।

इति वीपालितः। अन्यच्च नृपस्य दुर्भिक्षे आश्रयणीयानि—

"शकटः शाकिनी गावो यानमास्कन्दनं खनम्।
अनूपः पर्व्वतो राजा दुर्भिक्षे नवभक्तयः"।

## दुष्कलत्रं मनस्विनां शरीर-कर्षणम् ॥७०॥

---

पत्नी भार्य्या चेति। सा च निगलं निगड़ं संसारकारालये पुंसां बन्धनरज्जुः। अलोहमयमसुदृढ़ं भवति। बन्धनशृङ्खलन्तु अपराधिनां पश्चादीनामन्यत्वाच्च लौहनिर्म्मितं सुदृढ़ं भवति। कलत्ररूपा बन्धनरज्जुस्तु प्रीति-सुख-लावण्य-स्नेह-सौहृद्यान्वितत्वेन संसारकारागृहे अलोहमयं प्रेम-सुखमयं स्यात्। बन्धनपाशो लोहमयः स्वर्णमयो वा भवतु। यद्वा सुधासिक्तः स्यात्तथापि तद्बन्धनजनित-क्लेशोऽवश्यम्भवतीति नात्रशङ्कावसरः। अन्यबन्धनन्तु सामयिकं, कलत्ररूपपाशबन्धनं दीर्घकालेनानुभवति। यस्यत्वेतादृशं बन्धनं नास्ति स नरः संसारे सम्यक् सुखी। यदि वा कलत्रं कुलस्त्री पतिप्राणा प्रसवपुत्रा स्यात्तदा सा अमृतायते। अलोहमयत्वेनाति पेलवतास्याः सूचिता। शास्त्रकारैरप्युक्तं 'लोह-काञ्चनजातत्वे शृङ्खलात्वं न भिद्यते'। 'अत्र निगलमिति। उभयोरैक्यं बोध्यम्। 'अन्दूः स्त्रियां स्यान्निगड़े प्रभेदे भूषणस्य च' इति मेदिनी। लोहः। लुह गार्द्धे, लुह्यते। ततो घञ्। गल अदने, गलति। अथा सिवम्, निर्गतो गड़ः सेचनमस्मात्, कठिनत्वादिति निगलम्। 'दुर्गस्थाने नृपादीनां कलत्रं श्रोणि-भार्य्ययोः' इति रभसः। कैङ् पालने, कलं त्रायते। ततः कादेशः। अथवा कड़ शासने, कडति। ततो बाहुलकादत्रन् च। गड सेचने, गड़ति गद्यते, 'गड़े रादेशश्च वा', इत्यवन् वा ॥६८॥

दुर्भार्य्यया सतिमतां शरीरहानिमाह दुरिति। मनस्विनां

## स्त्रीषु किञ्चिदपि न विश्वसेत् ॥ ७२ ॥

निरोधेनावलोकयेदिति । तेन तस्याः सम्यग्ज्ञानं जायते । कामाद्युद्वेः स्वास्थ्यहानिर्न स्यात् । न केवलं स्त्रीसन्दर्शने अपि तु सर्व्वेषु कार्य्येष्वप्रमत्तेन भाव्यम् । प्रमत्तस्यावलोकने च कामप्रवृद्धौ विपदायातीति । यद्वा सावहित-मानसः स्त्रियं पश्येत् पालयेच्च । उक्तञ्च 'गृहे स्थितापि युवतिः परिरक्षणीया' इति । दाराशब्दस्य नित्यबहुत्वं पुंसि इत्तिच । तथा च टीका: 'एकार्थेऽपि लिङ्ग-वचनभेदो यथा 'दाराः कलत्रं भार्य्येति' । 'प्रमत्तोऽनवहित-चित्तभ्रान्त-चञ्चलौ' । 'भार्य्या जायाथ पुं भूम्नि दाराः स्यात्तु-कुटुम्बिनी' इत्यमरः । दारयति भ्रातॄन्, दॄ विदारणे, णिजन्तः । 'दारजारौ कर्त्तरि णिलुक् च' इति घञ् ॥ ७१ ॥

सामान्यतो योषितस्तु स्वभावचपलत्वाद् विश्वासाभावमाह स्त्रीष्विति । स्त्रीष्वबलासु, किञ्चिदपि स्वल्पमपि । न विश्वसेत्, नैव दृढप्रत्ययं कुर्य्यात् । तासां सुकोमलहृदयत्वात् । शुक्रनीतौ च—

"शृङ्गिणां नखिनाञ्चैव दंष्ट्रिणां दुर्जनस्य च ।
नदीनां वसतौ स्त्रीणां विश्वासं नैव कारयेत्" ॥ इति ।

ग्रन्थान्तरे—

"विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च" ।

अन्यच्च—"स्त्रीषु गुह्यं न वक्तव्यं रात्रौ नैव च नैव च" ।

अपरञ्च—'गृहीतार्थं न मुञ्चन्ति नारी वर्व्वरकच्छपाये'ति ।

तासां मारस्याविगूढ विषयाणां रक्षण-धारण-गोपनेषु शक्ति-

## न समाधिः स्त्रीषु लोकज्ञता च ॥ ७३ ॥

सद्गुणमपि विश्वासे योज्यम् । अन्यच्चैतासां गुणदोषादिकं चाणक्य-राजनीतौ द्रष्टव्यम् । ब्रह्मवैवर्ते प्रकृतिखण्डे च—

"श्रुतौ पुराणे यासाञ्च चरित्रमतिगर्हितम् ।
तासु को विश्वसेत् प्राज्ञोऽप्राज्ञश्च दुरात्मनाम्" ॥

'स्त्री योषिदबला योषा नारी' इत्यमरः । किञ्चिदिति । किम् शब्दादनिश्चयार्थे चित्प्रत्ययः । स्त्रीपदनिवृत्तिः प्राग्वत् ॥७२॥

स्त्रीषु नास्त्यात्मनः प्रणिधान-सामाजिकत्वयोर्निषेधमाह नेति । स्त्रीषु योषित्स्वयं नास्तीति । समाधिश्चित्तस्यैकनिष्ठता, कस्मिन्नपि विषये मनः सुस्थिरीकृत्य संनिरोधो योगाख्यो मनः प्रणिधानञ्च नास्ति । लोकज्ञता, लोकानां व्यवहारः तज्ज्ञत्वम् । लौकिकतत्त्वे पुरुषवद् अभिज्ञता च । पुंस इव तासां गर्भादिस्वा-भावादेते नष्टाः । 'लोकज्ञता चे'ति भिन्नपाठे तासां तत्त्वज्ञताभाव्य-मित्यर्थः । 'समाधिर्ना समर्थने । ध्याने वैरस्य नियमे काव्यस्य च गुणान्तरे' इति रभसः । 'समाधिश्चित्तैकाग्रता' इति योगिनः । 'समाधिः समतावस्था जीवात्म-परमात्मनोः' इति स्मृतौ च । अन्यत् योगदर्शनभाष्ये पुष्कलमस्ति । लौकिकतत्त्वविषये उक्तं दुर्गसिंहेन—

"वैदिका लौकिकाश्चैव ये यथोक्तास्तथैव ते ।
निर्णीतार्थास्तु विज्ञेया लोकात्तेषामसंग्रहः" ॥

लोकं तत्त्वतः जानातीति लोकज्ञः तद्भावो लोकज्ञता, तत्र

**स्त्रीणां भूषणं लज्जा ॥ ७७ ॥**

**विप्राणां भूषणं वेदः ॥ ७८ ॥**

---

मण्डनं चाकृतीनाम्' । 'अलङ्कारस्त्वाभरणं परिष्कारो विभूषण'-मित्यमरः । विगतं रूपं विरूपन्तस्य भावो वैरूप्यं रूपाभावः । रुपु विमोहने, रोपयति, रूपधातोरच्प्रत्ययः । 'अन्येषामपि' इत्यादिनोकारदीर्घः । डुकृञ् करणे, अलङ्क्रियतेऽनेनेति अलं पूर्व्वात् कृञो घञा सिद्धम् ॥ ७६ ॥

नारीणां विशेषणमाह स्त्रीणामिति । स्त्रीणां नारीणां योषितामिति । भूषणमाभरणमलङ्कारः । तदेव लज्जा व्रीडेति । लज्जा-दोष-पापान्यायेभ्योऽवनमनमात्मसङ्कोचो वेति । 'व्रीडो-ऽस्त्रीवे त्रपा लज्जा' इति मेदिनी । अन्यच्च 'क्षमा लज्जा च योषिताम्' । एते द्वे तासां विभूषणमिति नीतिविन्नि-रुक्तम् । लघुचाणक्ये च 'नारीणां भूषणं लज्जा, विद्या सर्व्वस्य भूषणम्' । लज्जा इत्यत्र पतिरिति पाठो वृद्धचाणक्ये । 'अक-र्त्तव्ये कर्म्मणि परमानभयं लज्जे'ति अपरे प्राहुः । पुंसां पक्षे 'आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत्' इति वृद्धसम्मतम् । आहारे तु यावत् क्षुन्निवृत्तिं, पथ्यं हितं मेध्यञ्च भुञ्जीत । व्यवहारे च सलज्जत्वे कार्य्यहानिः बुद्धिहृत्तिसङ्कोचश्च । भूष् अलङ्कारे, भूषयति अनेन । ततो ल्युट् । ओलस्जी व्रीडे, लज्जा । ततः 'झलां जश् झशि' । इत्यनेनाप्रत्ययः ॥ ७७ ॥

भूषण-प्रसङ्गतो ब्राह्मणानामलङ्कारमाह विप्राणामिति ।

## सर्व्वेषां भूषणं धर्म्मः ॥ ७९ ॥

विप्राणां ब्राह्मणानां मुखजानामिति । भूषणमण्डनमलङ्कारः । वेदाः ऋगादयः । ऋक्-साम यजुरथर्व्वाणश्चत्वारः । 'यत्रार्थवशेन पादव्यवस्था सा ऋक्' । 'गीतिषु सामाख्या' । 'शेषे यजुः' । 'शान्ति-पौष्टिक-नीत्यादिप्रत्यायकमथर्व्व' । सामान्यतः चतुर्षु वेदेषु त्रयीति समाख्या । एतैश्च स्वाध्यायादिभिः विप्रा अलङ्क्रियन्ते । नान्यैरन्यैर्भूषणालङ्कारैः । उक्तञ्च मनुना—

"वेदमेव सदाभ्यस्येत् तपस्तप्स्यन् द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते" ॥

अनधीयानो विप्रः काष्ठमयवारणवत् चर्म्ममयमृगवच्च भवति । वेद इत्युपलक्षणं याज्ञवल्क्योक्त-चतुर्दशविद्याश्चाध्येतव्याः । प्राक् वेदानधीत्य पश्चाच्चतुर्दशविद्या अध्येतव्याः । महाभाष्ये चैषां पाठः स्वाभाविक उक्तः—'तस्माद् ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येतव्यो ज्ञेयश्चेति' । 'यज्ञजन्मनमो विप्रो वर्णज्येष्ठः कठो द्विजः' इति त्रिकाण्डशेषः । स पूर्व्वो, विप्रादि धर्म्मान् । 'मात्सरोपसर्गं' इति कः । ७८ ।

सकलमनुजानां मण्डनमाद्य सर्व्वेषामिति । सर्व्वेषां लोकानां भूषणं मण्डनमाभरणमिति । धर्म्मः लोकानां विधारकः । 'वेद-प्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्य्ययः' इति भागवते । 'यतोऽभ्युदयनिःश्रेयस सिद्धिः स धर्म्मः' इति काणादाः । मनुना च—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।

भूषणानामपि भूषणं विनयो विद्या च ॥८०॥

---

एतत् सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः" ।
ये तु धर्महीना स्ते पशुतुल्याः । सदुक्तं पुराणे—
'धर्मो हि तेषामधिको विशेषोधर्मेण हीनाः पशुभिः समानाः' ।
"ज्ञानं नराणामधिकः" इति क्वचित् पाठः । तेषां मानवाना-मित्यर्थः । अधिकः पश्वादिभ्य इति । महाभारते च 'धारणाद्धर्मं इत्याहुर्न लोकचरितञ्चरेत्' । लोकाचरितस्य बहुलादनव-स्थितत्वाचेति तदनुकरणे धर्माभाव इति । प्रागुक्तमन्यत् । धर्महेतुः दानं शौचमिलं परोपकृतिरित्तीवक्तिरेवेति भावः ॥७८॥

भूषणानां मध्ये श्रेष्ठभूषणमाह भूषणेति । भूषणानां मण्ड-नानामाभरणमिति । अतिभूषणम् । तेषां मध्ये उत्तमाभरणं विनयो नम्रता सुजनत्वञ्च । एवं विद्या च । सा च शास्त्रपा-ठेन सतामुपदेशेन च जनितम् ज्ञानम् । तदुक्तं पुराणे—

"बहवोऽविनयाद् भ्रष्टा राजानः सपरिच्छदाः ।
वनस्थायेव राज्यानि विनयात् प्रतिपेदिरे" ॥

अन्यत्र 'न गुणो विनयात्परः' । अन्यत्र नीतौ विनयो दण्डः । तथा च व्यवहारतत्त्वे—

"पारुष्ये साहसे चैव युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न लभ्येत विनयः स्यात् समस्तयोः" ॥

विद्याविषये च विष्णुनोक्तम्—

**अनुपद्रवं देशमावसेत् ॥ ८१ ॥**

---

"विद्या ददाति विनयं विनयाद् याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम्" ॥

इत्याह विष्णुशर्मा । विद्याप्रशंसा च कविभिरुक्ता—

"मातेव रक्षति पितेव हिते नियुङ्क्ते,
कीर्तिं च दिक्षु वितनोति ददाति लक्ष्मीम्" ।
"किं किं न साधयति कल्पलतेव विद्या" ।

अन्या विद्याप्रशंसा प्रागुक्ता । राजनीतौ च वक्ष्यति । णीञ् प्रापणे, विनीयते । विपूर्व्वाद्यन्तरेरच् । 'भूषणानां भूषणं सविनया विद्या' इति पाठान्तरस्थे विनयेन सह वर्त्तमाना या विद्या सा सकलभूषणोत्तमा इत्यर्थः स्यात् । विद्येति । विद ज्ञाने, वेत्ति । विदेः क्यप् ॥ ८० ॥

निरत्ययस्थाने निवासमाह अन्विति । अनुपद्रवम् उपद्रवैः-सन्ताप-रोग-शोकाधिभीरहितमनुपद्रवम् । तादृशं देशं जनपद-मावसेन्निवासं कुर्यात् । विद्या वित्तं शिल्पं वाणिज्यं कृषिश्च यस्मिन्नेते च देशो निवासे श्रेयान् । निरुपद्रवस्थाननिवासे स्वास्थ्यचित्तस्फूर्त्यादयश्च भवन्ति । ततो बुद्धेः प्राखर्यं स्यात् । तत्त्वकौमुद्यां मिश्रैरुक्तं 'आधिभौतिकदुःखप्रतीकाराय निरत्ययस्थानाध्यासनादि सुकरम्' । अन्यच्च 'देशञ्च सोपद्रवं भार्यां यौवनगर्वितां परस्य मुञ्चन्ति गोप्यं बुधाः' । अपि च—

"दैवज्ञः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।

## साधुजन-बहुलोदेशः ॥ ८२ ॥

पञ्च यत्र न विद्यन्ते न कुर्य्यात्तत्र संस्थितिम्" ॥

अपरञ्च 'त्यजेद्देशमवृत्तिकं सवृत्तिकं समाश्रयेत्' ।
सवृत्तिकं शिल्प-जीविकार्जनोपयोगि-देशमित्यर्थः । 'उपद्रवो रोगारम्भे उत्पाते क्लेशदायके' इति । द्रु द्रु गतौ, उपद्रवणमुपद्रवः । 'समियुद्रुदुवः' इत्यनेन घञ् । यद्वा 'ऋदोरप्' इत्यनेन सिद्धम् । दिश भति सर्ज्जने, दिशति । ततः पचाद्यच् । यद्वा दिश्यते इति घञा सिद्धः ॥ ८१ ॥

विशिष्टदेशमाह साध्विति । यत्र साधवः सज्जनाः प्राज्ञा इति यावत् । ते च बहवः सन्ति । तस्मिन् जनपदे वर्त्तन्ते । स नद्यम्बु-हृद्याम्बु-सम्पन्नौषधि-पालितो देशः प्रसिद्धो निरुपद्रवः सम्यग् निवास-योग्यः । 'स देशो यत्र निर्वृतिः' इति राजनीतौ । स च भारतवर्षादिः, एतल्लक्षणं प्रागुक्तम् । देव मातृकाऽदेवमातृकादि भेदेन द्विविधो देशः पुनस्त्रिविधः जाङ्गलोऽनूपः साधारणश्च । स च पुनर्मध्यदेशोदीच्यदेश-प्राच्यदेश-दक्षिणापथ-विन्ध्यवासि देशादिभेदेन बहुप्रभेदो निगदितो मत्स्यपुराणे शक्तिसङ्गमतन्त्रे च । निर्जीविक-देशनिवासे निषेधमाह—

"ऋणदाता च नृपतिः श्रोत्रियः सजला नदी ।
एते यत्र न विद्यन्ते न कुर्य्यात्तत्र संस्थितिम्" ॥

मन्त्रसाधका आहुः—

"माता च चिन्मयी देवो पिता देवो महेश्वरः ।

## राज्ञो भेतव्यं सर्व्वकालम् ॥ ८३ ॥

यान्त्यया देवभक्ताश्च स्वदेशो भुवनत्रयम्" ॥ इति ।
'साधुर्जने मणौ वार्द्धुषिके सज्जनरम्ययोः' इति हैमः । साधुशब्दः
साड् निपातः । सहन्त् साध्नोतीति 'भावोऽनुपसर्गे' इत्यनेन फः ।
यद्वा षध प्रापणे, इत्यतो वाहुलकादुन् च ॥ ८२ ॥

नृपभीतेः सर्व्वदा प्रयोजनमाह राज्ञ इति । राज्ञो नृपा-
त्सकाशात् च । भेतव्यं भयम् सर्व्वथैव भवितव्यम् । यतः
'लोकानां कारणं कालो राजा कालस्य कारणम्' इति वामन-
दशाख्यान्याने जगद्धराः । राज-शासनेन विना प्रजास्तु मात्स्य-
न्यायः कदर्थितः स्यात् । सकलदिक्पालांशसम्भवो नृपालः
सर्व्वथा माननीय एव । यो हि तदनिष्टमाचरति स राज-
विद्रोही स्यात् । राज-नीतिविरहितस्य कारागारवासादयः
सम्भाव्याः । पाद्मे च—

"नारायणादृते नान्यो वसुमत्याः पतिर्भवेत् ।
नारायणांशजो राजा मनुष्यो न कदाचन" ॥

मात्स्येऽपि—

"गुणिनां पूजनं कुर्य्यान्निर्गुणानाञ्च शासनम् ।
कथिताः सततं राजन् राजानश्चारचक्षुषः" ॥ इति ।

अपरञ्च—"भय-त्राता च राजा च सर्व्वेषां पालकः पिता ।
यो राजा रक्षकः पाता प्रजानां सच निश्चयः" ॥

'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ' इति मेदिनी । राज्

## न राज्ञः परं दैवतम् ॥ ८४ ॥

दीप्तौ, राजति। 'कनिन् युवृषि' इत्यौणादिकात् कनिन्। सर्वकालमिति 'कालाध्वनोरत्यन्तसंयोगे' द्वितीया। सर्वस्मिन् काले इति सूत्रार्थः॥ ८३॥

भूलोके नरेषु नृपस्य दैवत्वमाह नेति। राज्ञो नृपात् परं नृलोके श्रेष्ठमन्यत् दैवतं देवता आराध्यं सेव्यञ्च न विद्यते। तदुक्तं नीतिशास्त्रकृद्भिः—

"बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति" ॥

अपरञ्च—

"यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे।
मृत्युश्च वसति: क्रोधे सर्व्वतेजो मयो हि सः" ॥

येतु राजसेवा निरतास्ते नितरां सुखिनो भवन्ति। राज्ञोऽनिष्टकारिणो दुःखिनः स्युरितिनिश्चितम्। राज्ञा तु पुत्रनिर्विशेषेण प्रजाः पालनीयाः। तदुक्तं मार्कण्डेयपुराणे 'प्रजाः पुत्रानिवौरसान्' इति। अपरञ्च वाराहे—

"प्रजा येन प्रमोदन्ति येन तुष्यन्ति ब्राह्मणाः।
एवन्ते पुत्र कर्त्तव्यं मम प्रिय-हितैषिणा" ॥

'प्रमोदन्ते' इति वा पाठः।

अन्यद् भारतीयशान्तिपर्व्वणि, शुक्रनीतौ, मानवधर्म्मशास्त्रे; अस्यार्थशास्त्रे च वर्णितमस्ति। दैवतेति स्वार्थे तलादेशः। सतः

## रिक्तहस्तो न राजानमभिगच्छेत् ॥८६॥

## गुरुञ्च देवञ्च ॥ ८७ ॥

शून्यहस्तस्य पुंसो नृपसन्निधाने गमननिषेधमाह रिक्तेति। रिक्तं शून्यं द्रव्यरहितमिति। तादृशः हस्तो यस्येति विग्रहः। सः राजानं नृपं नाभ्यभिगच्छेत् न तं सेवेत, साक्षात्कारं न विदध्यादिति। तदुक्तं वृद्धचाणक्ये—

"रिक्तपाणिर्न सेवेत राजानं देवतां गुरुम्"।

सफलहस्तस्य नृपादिदर्शने झटित्येव तेषां प्रीतिरुत्पद्यते तत्फलमिव कार्यफलं शुभदर्शनञ्च भवतीति भावः। अन्ये तु—

"रिक्तपाणिर्न पश्येच्च शिशुं देवं गुरुं नृपम्"

इत्याहुः। 'रिक्तपाणिना नृपो नाधिगन्तव्य' इत्थं पाठान्तरत्वे रिक्तपाणिना फल-धनादिरहितकरेण जनेनेत्यर्थो बोध्यः। 'रिच वियोजनसंपर्चनयोः' रिच्यते। ततः क्तप्रत्ययः। नात्र तुच्छार्थबोधको रिक्तशब्दः॥ ८६ ।

यथा भूपालसविधौ गमनं रिक्तकरस्य प्राक् निषिद्धं तथा गुरुदेवयोरप्यर्थेऽपि प्रतिवार्यते गुरुश्चेत्यनेन। गुरुं दीक्षयितारं ज्ञानदातारं कुलगुरुं वा। पितरौ च। दण्डिनं सन्यासिनम्। धर्मोपदेष्टारं शीलवन्तञ्च। अन्यच्च स्मृतौ—

"वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी।
एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम्"॥

एतद्वचनोक्तमुत्तरोत्तरं प्रबलं पूर्वपूर्वं प्रतीति प्रत्येतव्यम्। साधु-

राजपुरुषैः सह सम्बन्धं कुर्य्यात् ॥९०॥

---

स्वकार्यसाधनार्थं गुणदोषां परिचयार्थश्च राज सभायां राज-पुरुषसन्निधाने वा गमनमुचितमिति भावः। 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीव'मिति मेदिनी। दीनानां निःस्वानाञ्च राजसेवा श्रेयसी। तत्कोपोत्पादनं नैव कार्य्यम्। तत्परितोषात् कोपो महानिष्टकरः। कथा प्रथाख्या नृपसन्निधौ वस्तव्यं गन्तव्यञ्च तत्सर्वं विराटपर्वणि पाण्डवन-वासप्रसङ्गे पुरोधसा धौम्येन सम्यग् वर्णितमस्ति। सोमदेवीय-नीतिवाक्यामृते चाप्यदस्तीति प्रसङ्गादुक्तम्। कुङ शब्दे, कूयते। बाहुलकात्कक्। यद्वा कुल संस्त्याने, कोलयति। 'इगुपध' इत्यादिना कः ॥ ८९ ॥

नृपामात्यादिभिः सार्द्धं सम्बन्धकरण प्रयोजनमाह राजेति। राज्ञा भूभुजा ये अमात्यादयः पुरुषाः तैः सह सम्बन्धं स्वप्रयो-जनसिद्धयर्थं मैत्र्यानुगत्यादिकं कुर्य्यात्। तेन स्वोपकारः सम्मान-वृद्धिश्च स्यात्। नतु विवादादि। ततो दस्युतस्करादिभिरनिष्टं कर्त्तुं न शक्यते। अर्थसाधनेतूक्तम्—

"तदर्द्ध राज-सेवायां भिक्षया नैव नैव च"।

इति वृद्धचाणक्ये। अन्यदुक्तं श्रेष्ठपुरुषसङ्गविषये कविभिः—

"सद्भिरासीत सततं सद्भिः कुर्व्वीत सङ्गमम्।

सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत्" ॥

पुरुषः। पुर अग्रगमने, पुरति। 'पुरः कुषन्' इत्यौणादिसूत्रात्

## राजदासी न सेवितव्या ॥ ८१ ॥

## न चक्षुषापि राजानं निरीक्षेत ॥ ८२ ॥

---

निष्ठम्। पृषोदरादित्वाद् दीर्घः। ग्रन्थ ग्रन्थने, ग्रन्थति। ग्रन्थः सम्मोसनं संदर्भ इति। संपूर्व्वाद् ग्रन्थधातो क्ता निष्ठम् ॥८०॥

राज-दासी-सेवाया निषेधमाह राजेति। राज्ञां महीभुजाम्। दासी, परिचारिका, भुजिष्या भोगिनी, चेति। सा च मान्यैर्जनैः सेवितव्या उपभोग्या वा। अत्र दासीत्युपलक्षणम्। तदनुमत्या नृपसम्बन्धीनि द्रव्याणि नैव सेव्यानि। नृपनामाङ्कं द्रव्यं तदाज्ञादेशाभ्यां विना न व्यवहार्य्यम्। 'दासी चाथ भुजिष्या' इति मेदिनी। 'दासी भृति-नियोज्या भुजिष्या परिचारिका' इत्यन्यत्रास्ति। धर्म्मशास्त्रे त्वस्मिन् देवदास्यपि नैवोपभोग्या। तत्रापि च दास दासीशब्दौ सामान्यपर्यायौ पद्धति-निरोधौ नापि भृत्यवाचकौ। दसु उपक्षये, दस्यते। कर्म्मणि घञ्। गौरादित्वाद्दीकारः। यद्वा दासृ दाने, दासति। ततो घञ्। अभेदात् तत्रापि तात्पर्य्यान्तः। 'तदिङ्गितभावो द्रव्यवत् प्रकाशते' इत्यनेन पदार्थमात्रकत्वम्। ततः पूर्व्ववद्दीकारः ॥८१॥

नेत्रेणापि राजदर्शन-निषेधमाह नेति। चक्षुषा नेत्रेण नयने-नेति। राजानं भूपालम्। न निरीक्षेत नैव पश्येत्। यतः कदा राज्ञो हि कीदृशी मानसिकी दशा स्यात् केनापि न ज्ञायते। अतः सामान्यरीत्या झटिति राजानं

## जनपदार्थं ग्रामस्त्यज्यते ॥ ८३ ॥

---

विशेषतोऽमात्यस्य क्रुद्धस्य राज्ञो दर्शनं न समुचितम् । 'न चक्षुषापि राजधनं निरीक्षेत्' इत्येवं पाठे तु राज-धनस्य ग्रहण-हरणादेः का कथा तत्तत्प्रवृत्त्या चक्षुषापि नावलोकयेदिति । तद्दर्शने राजपुरुषाणां शङ्का वर्द्धिष्यते । नियमपूर्वकं नृपदर्शनं प्रीतिकरं हितप्रदञ्च । 'ईक्षणं चक्षुरक्षिणी' इत्यमरः । चक्ष धातोः चष्टे,चक्षतेऽनेन वा चक्षिङ्धातोः 'चक्षेः' शिच्च'इत्यौणादिकसूत्राद्धुसिः । शित्त्वादनार्द्धधातुकत्वाच्चक्षिङः स्थाने ख्याङ् न भवति । ईक्ष दर्शनालोचनयोः, निरुपसर्गादीक्षतेरात्मनेपदम् ॥ ८२ ॥

जनपदप्राप्तौ ग्रामत्यागोपदेशमाह जनेति । जनपदो बहुजनोषितो वाणिज्य-शिल्पादि सम्पन्नो देशः । तल्लाभे ग्रामोऽल्प-जननिवासस्थानम् । सुसमृद्धकृषीवल-शूद्रापणादि-भूषितम् । त्यज्यते परित्यज्यते । श्रेष्ठवस्तुलाभे तदर्थं क्षुद्रवस्तुत्यागो हि साम्प्रतम् । यदुक्तं—

"त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्" ॥

इति वृद्धचाणक्ये । ग्रामलक्षणन्तु—

"तथा शूद्रजन-प्राया सुसमृद्धकृषीवला ।
क्षेत्रोपयोगभूमध्ये वसतिः ग्रामसंज्ञिका" ॥

इति मार्कण्डेयपुराणे । 'भवेज्जनपदो जानपदोऽपि जनदेशयोः' इति विश्वः । जनः पदं वस्तु यत्र सः । 'ग्रामः स्वरे , संवसथे

## पुत्रे गुणवति कुटुम्बिनः स्वर्गः ॥ ९४ ॥

---

द्वन्द्वे गन्धादिपूर्व्वके' इति विग्रहः। ग्रस अदने, ग्रसते गम्यते वा। 'पचे राच' इत्यौणादिकसूत्रात् ग्नः ॥ ८२ ॥

तनये सुशिक्षिते सति तदात्मजनानां स्वर्गसुखलाभमाह पुत्र इति। पुत्रे आत्मजे सुते गुणवति धन-सद्विद्या-चरित्रवति सति। कुटुम्बिनः तत् पित्रादेः स्वजनादेश्च। स्वर्गः अमरधाम निर्विशेष सुखस्वरूपो वा। तदुक्तं नीतिविद्भिः 'दुःखान्ते पण्डितः सुतः' इति। एकस्मिन् तनये विद्या धन-सुचरित्रान्विते तत् कुटुम्बिनः सर्व्वे सुखिनः स्युरिति। अत्र स्वर्गः स्वर्गसुखोऽपार-सुखलाभः। 'पुत्रेणायं लोकोजय्यः' इति श्रुतेः। अन्यच्च—

"एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना।
वासितं तद्वनं सर्व्वं सुपुत्रेण कुलं यथा" ॥

अपरञ्च 'सत्पुत्रः कुलदीपकः'। केचिदुच्यते 'स्वर्ग इति तेषां निधनोत्तरं दानश्राद्धादिजन्य फलेन वेति'। स्वर्गलक्षणं भट्टपादैरुक्तम्—

"यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत् सुखं स्वः पदास्पदम्" ॥ इति।

'स स्वर्गः स्यात् सर्व्वान् प्रत्यविशिष्टत्वात्' इति कर्म्ममीमांसासूत्रम्। 'स्वर्गे लोके न भयं किञ्च नास्ति' इति काठके च स्वर्गसूचकं प्रमाणम्। अर्ज अर्ज्जने, सुष्ठु अर्ज्यते इति स्वर्गः,

कुटुम्बार्थं पुत्रस्त्यज्यते ॥ ८५ ॥

आत्मार्थं सर्वं त्यजति ॥ ८६ ॥

---

यद्वा अत्र मतिस्थानार्जनोपार्जनेषु, अटत्यतेऽस्मिन्निति । 'हल-श्चेति' घञ् । अर्द्धर्चादित्वात् क्लीवत्वम् ॥ ८४ ॥

कुटुम्बार्थं पुत्रस्यापि त्यागमाह कुटुम्बार्थमिति । तदर्थम् आत्मीयजनानां परिरक्षार्थं तेषां हिताय धर्माय च । यद्वा कुलरक्षार्थमिति । पुत्रः आत्मजः सुत इति । त्यज्यते परि-ह्रियते । महोदारचरितानां लक्षणं यत्परार्थे सर्वस्वत्याग इति । यद्यपि तनयो दुराचारी दुर्दान्तश्च भवेत्तदा स त्यागार्हः । न तु वधार्हः । यद्वा सत्यार्थं लोकाराधनार्थं च रघुपतेः श्रीरामस्य जनकतनयापरिहारवत् परिहार इति । येनापि कुलरक्षा स्यात्तेन च यदि कुलोच्छेदसम्भावना प्रबला तदा तत्त्यागः श्रेयान् । 'त्यजेदेकं कुलस्यार्थे' इति नीतिवाक्यात् । अपरे तु 'अत्र कुटुम्बपदेन महाजनपदवत् बह्व्यः सम्पदः बहवो वा जना' इत्यर्थमाहुः ॥ ८५ ॥

आत्म-परिरक्षार्थं सकलविषयत्यागमाह आत्मेति । आत्मार्थं स्वस्य जीवनादेः रक्षार्थं सर्वं धनदारादिकम् । त्यजति जहाति । जगति जीवानां जीवनं सर्वेभ्यः श्रेष्ठम् । सर्वस्य वस्तुनो नाशे जीवनं नैव नश्यति । परं जीवननाशे सर्वमन्यदस्तु वा मास्तु वा । अतस्तत्सर्वं नष्टमेव । एवञ्च प्राणरक्षार्थं सर्वमपि परि-हरेत् । तदुक्तं 'आत्मार्थे पृथिवीं त्यजेत्' । अन्यच्च—

ग्रामार्थे कुटुम्बस्त्यज्यते ॥ ८७ ॥

अतिलाभः पुत्रलाभः ॥ ८८ ॥

---

"आत्मानं सततं रक्षेद् दारैरपि धनैरपि"। इति।
ब्रह्मविद्भिरप्युक्तम्—

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।

यच्चास्य सन्ततोभावस्तस्मादात्मेति कीर्त्यते"॥ इति।

'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि' इति धरणिः। अत सातत्यगमने, अतति। 'सातिभ्यां मनिन्' इति मनिन् ॥८६॥

ग्रामलाभे जाते तदुद्धारार्थं वा कुटुम्बस्य त्यागमाह ग्रामार्थमिति। ग्रामे पूर्वोक्तलक्षणे लब्धे सति तदर्थं कुटुम्बः ज्ञातिजनः परिजनो वा। त्यज्यते, परित्यज्यते। विप्रादिवर्णप्राया प्राकार-परिखादिरहिताऽनेकलोकवसतिर्ग्रामसंज्ञिका। 'इहापि शून्यवसतिः' इति श्रीधरस्वामी। ग्रामलक्षणम् पूर्वमुक्तम्। कुटुम्बात् ग्रामोऽधिको महार्घः। अतस्तल्लाभे समुद्धारे च कुटुम्बत्यागः सूचितः। महती लाभे स्वल्पत्यागयदिति। 'समो सम्यसय ग्रामौ' इत्यमरः। 'ग्रामः स्वरे सम्वये इन्द्रे शब्दादिपूर्वकः' इति विश्वोऽपि। ग्रसु अदने, ग्रस्यते लोकैर्यः सः। 'ग्रसे रात्' इति मः॥ ८७॥

गृहस्थानां विशेषलाभमाह अतीति। पुत्रलाभः। पुत्रस्य सुतस्य लाभः प्राप्तिः पुत्रोत्पत्तिः। स अतिलाभः सर्वेभ्यो-

## प्रायेण हि पुत्राः पितरमनुवर्त्तन्ते ॥८९॥

ऽधिक लाभः । तेन च धर्म-वंशरक्षा तदुभयं भवति । तदुक्तम् भारते विराटपर्व्वणि—

"पुत्रः प्रियाणामधिको भार्य्या च सुहृदाम्वरा" ।

स्मृतौ च—

"पुत्रेण वसुतामेति पौत्राद्दुरत्वमाप्नुयात्" ।

'अपुत्रस्य गतिर्नास्ति' इति च । कन्यालाभादधिकः पुत्रलाभः । सा चोद्वाहात् परं गोत्रान्तरिता भर्त्तृकुलं याति । पुराणे पुत्राश्चतुर्विधाः । स्मृतौ द्वादशप्रकाराः । ब्रह्मवैवर्त्ते प्रकृतिखण्डे सप्तविधाः पुत्राः । कलौ तु औरसदत्तकौ द्विविधौ । पुराणे च—

"सत्पुत्रं परमं तीर्थं प्राप्य मुच्यन्ति पूर्व्वजाः ।

पितापि मत्पसुक्तः स्यात् जाते पुत्रे महात्मनि" ॥

श्रुतिश्च 'यस्य पुत्रा दायमुपयन्ति सहृदः साधुवृत्तम्' । 'एष्टव्या बहवः पुत्राः' इत्यादि श्रुतिस्मृत्योः पुत्रपदोत्तर-बहुवचन-विधानाद् बहुपुत्रा एष्टव्याः । 'ज्येष्ठेनैव तु पुत्रेण पुत्री भवति मानवः' इति यथानवचनमदद्यजातस्य सुतस्य प्राधान्यं कार्य्य-विशेषे सूचितम् । अन्यदनन्तदेवकृत-राजधर्मकौस्तुभे प्रथमाध्याये वर्णितमस्ति ॥ ८८ ॥

पुत्राणां जनकानुवर्त्तनमाह प्रायेणेति । पुत्राः सुताः पितरं जनकमिति । अनुवर्त्तन्ते सर्व्वेषु विषयेषु अनुकुर्वन्ति । पितृ-नियमानुसारेणाचरणं कुर्वन्ति । प्रायपदोपादानात् बहवः सुता

पुत्रा विद्यानां पारं गमयितव्याः ॥ १०० ॥

---

एवं कुर्वन्ति। जननकालीन-ग्रह-नक्षत्रादि-संस्थान-वैकल्यात् कोऽपि तादृगनुकरणं न करोतीति। येतु सुता विद्या-विनय-धर्मसम्पन्नास्तेऽनुकुर्वन्त्येव। सर्वकर्मसु पित्रादेशमनुसृत्य तमनुगच्छन्ति। अन्ये अज्ञाः सुता अविनीताः पितरं नानुयान्ति। तथाच धर्मशास्त्रकाराः—

"येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात् सतां मार्गः ··· ··· ··" ॥

अन्यत्रोक्तम्—

"सुतः पितृगुणं धत्ते धत्ते मातृगुणं सुता"।

अत्र शास्त्रकाराहुः—'पितृतः स्नायुमस्थि मज्जानः, मातृतो लोम-लोहित-मांसानि पुत्रे संक्रामन्ति'। अन्यत्र च 'कारणगुणा हि कार्यगुणानारभन्ते' इति पितृगुणाः पुत्रे संगच्छन्ति। 'प्रायो-बाहुल्य तुल्ययोः' इति विश्वः। पा रक्षणे, पाति। 'नप्तृ नेष्टृ' इत्यौणादिकसूत्रत्वात् साधु ॥ ९८ ॥

तनयानां विद्योपदेशे प्रयोजनमाह पुत्रा इति। विद्यानाम् अर्थशास्त्र-वार्त्ताशास्त्र-धर्मशास्त्रोक्तानां पारं मर्यादां विषयसमूह-ज्ञानकाष्ठां गमयितव्याः प्रापयितव्याः। तेन तेषामैहिक-पारत्रिक-समुन्नतिर्भविष्यतीति। विद्या च—अष्टादशविधा इति दण्डि-दर्पणकारौ। चतुःषष्ठिप्रकारा विद्या इति ललितविस्तर-

## दुर्गतेः पितरौ रक्षति स पुत्रः ॥ १०१ ॥

---

ख्याताः । चतुःषष्टि कला विद्या इति शैवतन्त्रे च । तथैव कामसूत्रव्याख्यानेऽपि । 'एता विद्याश्चतुर्दश' इति पौराणिकाः ।

"पुराण-न्याय-मीमांसा धर्मशास्त्राङ्गमिश्रिताः ।

वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" ॥

इति धर्मशास्त्रकृतोऽपि । छान्दोग्ये सनत्कुमार-नारदसंवादे 'ऋग्वेदं भगवो अध्येमि' इत्यारभ्य नानाविद्या-नामानि समुद्दिष्टानि । सति सामर्थ्ये सकलविद्यानां पारगामित्वं सम्पत्तेः परमाकरमिति । तदुक्तं वृद्धचाणक्ये—

"सत्कुले योजयेत् कन्या मित्रं धर्मेण योजयेत् ।

व्यसने योजयेच्छत्रून् पुत्रान् विद्यासु योजयेत्" ॥

क्वचित्त 'पुत्रा विद्यादानार्थं प्रारम्भयितव्याः' इत्थं पाठान्तरं दृश्यते, तदात्वे शिक्षाप्रदानार्थं तनयानां तदारम्भणं कारयितव्यमित्यर्थः । पाठस्त्वोऽष्योऽवचिकरः । प्राक् प्रोक्तमन्यत् । 'पारं प्रान्ते परतटे' इति हैमः । पार तीर कर्म समाप्तौ । पारयति । ततः पचाद्यच् । १०० ।

नानाविपद्भ्यो रक्षणं यः करोति स पुत्र इत्याह दुरिति । यः पुत्रस्तनयः दुर्गतेर्नरकात् क्लेश सन्ताप-शोकेभ्यश्च । पितरौ, मातरं पितरञ्च रक्षति पालयति उद्धारयति च । स एव सुतः । पुतस्त्राणादन्वर्थनामा स्यादिति शेषः । यद्वा दुर्गतेस्त्राणकारणा-

कुलं प्रख्यापयति पुत्रः ॥ १०२ ॥

---

क्षेत्रोः पुत्रः पुत्रसदृशः । श्यामजस्य तत्कारणन्तु स्वाभाविकमिति । तदुक्तं पुराणकृद्भिः—

"पुण्य-प्रसक्तो यस्यात्मा सत्यधर्मरतः सदा ।
बुद्धिमान् ज्ञान-सम्पन्नः तपस्वी वाग्विदाम्वरः ॥
सर्व्वकर्मसु संधीरो वेदाध्ययनतत्परः ।
सर्व्वशास्त्रप्रवक्ता च देवब्राह्मणपूजकः ।
कुलस्य तारको विद्वान् कुलस्य परिपोषकः ।
एवं गुणैः स संयुक्तः सुपुत्रः कुलपावनः" ॥

स्ववैर्वे संस्कृतं येन स्वयं नोत्पादितः स दत्तकत्वेन प्राप्तः पुत्रप्रतिनिधिः । यत्रार्थे स्मृतिश्च—

"अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा" ।

दुष्टा क्लेशदायिनी गतिर्दुर्गतिः । 'निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । पितराविति 'पिता माता' इत्येकशेषो वा ॥ १०१ ॥

पुत्रस्य कुलोज्ज्वलकरत्वमाह कुलमिति । पुत्र. सुतः । कुलं वंशम् । प्रख्यापयति । विद्या-धन-मान धर्मैः समुज्ज्वलयति कीर्त्त्या मण्डयतीति । उक्तञ्च ब्रह्मपुराणे 'सुपुत्रेण कुलं यथे'ति । तथा च वैष्णवे पुराणे—

"सत्पुत्रेण मुनिश्रेष्ठाः समुत्पन्नेन दुर्गतिः ।
उत्तारान्नियात् स्वर्गं पुत्राख्यो नरकादद्भुतम्" ॥
"एको हि गुणवान् पुत्रो निर्गुणेन शतेन किम् ।

## येन तत् कुलं प्रख्यातं सः पुरुषः ॥ १०२ ॥

चन्द्रो हन्ति तमांस्येको न च ज्योतिः सहस्रशः" ॥

'कुलं जनपदे गोत्रे सजातीयगणेऽपि च'। इति मेदिनी। कुलसंस्थाने बन्धुषु च, कोलति। 'इगुपध' इति सूत्रेण क-प्रत्ययः ॥ १०२ ॥

कुल कीर्त्तिवर्द्धकस्य प्रशंसामाह येनेति। येन कुलजातेन मानवेन स्वकुलं प्रख्यातं गुणधर्मगौरवैः प्रद्योतितं स एव पुरुषः पुमानिति। यथा सुधाकरेण शरत्पार्वणयामिनी तथैव महामतिना तनयेन कुलं समुद्भासितम्। अन्ये च बहवः केवलं जायन्ते म्रियन्ते च। तथाहि गारुड़े—

"कुलं पुरुषसिंहेन चन्द्रेणेव गगनं यथा"।

"न शौर्ये न मदं कुर्यात् स सखो व्यसनोज्झितः।

तस्मिन्नं यत्र विश्वासः पुरुषः स जितेन्द्रियः" ॥

नीतौ च—

"यदुपात्तं यशः पित्रा धनं वीर्य्यमथापि वा।

तत्र ह्रासयते यस्तु स नरो मध्यमः स्मृतः" ॥

"तद्वीर्य्याऽभ्यधिकं यस्तु पुनरन्यत् स्वशक्तितः।

निष्पादयति तं प्राज्ञा वदन्ति नरमुत्तमम्" ॥

"यः पित्रा समुपात्तानि धनवीर्य्ययशांसि च।

न्यूनतां नयति प्राज्ञाः तमाहुः पुरुषाधमम्" ॥

भारते च—

"उत्तमश्चिन्तितं कुर्य्यात् प्रोक्तकारी च मध्यमः।

**नानपत्यस्य स्वर्गः ॥ १०४ ॥**

**या प्रसूते भार्या ॥ १०५ ॥**

---

अधनोऽप्यहृदया कुर्यादकर्त्तोचरितं पितुः" ॥

"पात्रे त्यागी गुणे रागी भोगी परिजनैः सह ।

शास्त्रे बोद्धा रणे योद्धा पुरुषः पञ्चलक्षणः" ॥

पुरि स्थूलशरीरे शेते यः स पुरुषः । पुर अग्रगमने, पुरति । 'पुरः कुषन्' इति कुषन् ॥ १०३ ॥

अपत्यहीनस्य स्वर्गलाभे प्रतिबन्धकमाह नेति । अपत्ये पुत्र-कन्ये स्तः । नास्ति अपत्यं यस्य सोऽनपत्यः, तस्यानपत्यस्य पुंसः । अत्र षष्ठ्यर्थः सम्बन्धः । तस्य सन्तानरहितस्य जनस्य स्वर्गावाप्तिर्न भवति । न पतति वंशो येन जातेन तदपत्यम् । स्मृत्यनुसारम् 'अनपत्यस्य गतिर्नास्ति पतितस्य तथैव च' इति । 'अपत्यं तोकं तयोः समे' इत्यमरः । तयोः पुत्रकन्ययोः । पत्-ऌ गतौ, पतति । बाहुलकाद् यः । अप्रशब्दादिर्वा । सत्पुत्र-जनन-प्रशंसामाह पुराणे—

"भार्यामूलाश्च पुत्राश्च भार्यामूला गृहस्थता ।

भार्यामूलं सुखं सर्वं गृहस्थानां गृहे सदा" ॥

इति ॥ १०४ ॥

भार्याया विशिष्टत्वमाह येति । या नारी पत्युः तनयं प्रसूते सूयते वा सा भार्या पाणिगृहीतीत्यर्थः । तदुक्तं धर्मशास्त्रकारैः—

## तीर्थं समवाये पुत्रवतीमनुगच्छेत् ॥१०६॥

"न भार्य्यया विना पुत्रो न पुत्रेण विनान्वयः" ।

अन्वयोऽत्र वंशः ।

अन्यच नीतौ—

"भार्य्यामूलं सदापत्यं भार्य्यामूलञ्च मङ्गलम् ।
भार्य्यामूलश्च संसारो भार्य्यामूला च सद्गतिः" ॥

'भार्य्या जायाथ' इत्यमरः । पाणिः गृहीतोऽस्याः 'पाणिगृहीती भार्य्यायाम्' इति वार्त्तिकम् । डुभृञ् धारणपोषणयो', भृ भरणादौ वा । भ्रियते भृय्यते च तयोर्य्यत् । अन्यदर्थशास्त्रेऽस्ति ॥१०५॥

तीर्थसमूहे समयवतीं पश्चात्कृत्य पुंसो गमनमाह तीर्थेति । तीर्थानां तैर्थिकानां ज्ञानिनां समवाये सम्मेलने पुत्रवतीमपत्यवतीं स्त्रियम् अनुपश्चात्कृत्य गच्छेत् । यद्वा तीर्थानां धर्म्म-सभा-महोत्सवानां समूहे । अथवा तीर्थानां काशी-प्रयागादीनां निकरे पर्वादौ तामनु पत्यादिः गच्छेत्, शुद्धान्तचारिणीनां सुतवतीनान्तु पत्या पित्रा सुतेन च वा सह धर्म्मक्षेत्रे, महोत्सवे, श्मशाने, मारीभये, महाविप्लवे, नगर-ग्रामदाहे, संग्रामे च गमनं निर्वाधम् । तेषु स्पर्शादिदोषोऽपि नास्ति । तथा च रत्नाकरे बृहस्पतिः—

"तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगर-ग्रामदाहादौ स्पृष्टास्पृष्टिर्न दुष्यति" ॥

सतीर्थ्याभिगमनाद् ब्रह्मचर्यं नश्यति ॥ १०७ ॥

---

अपरस्मृतौ—

"दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि हि कष्टायां सद्यः शौचं विधीयते" ॥

"दीर्घकाष्ठे शिलापृष्ठे नौकायां आज्ञयोजने ।
सभायां सवगाम्नायां स्पर्शदोषो न विद्यते" ॥

इति स्मृतिः । 'नौकायां गृह-वाहने' इति पाठान्तरमप्यस्ति । 'यानादेरपरिहार्यत्व'मिति मानवस्मृतिव्याख्याने कुल्लूकभट्टः । अन्यत्र स्मृतौ—

"देवयात्रा विवाहेषु यज्ञ प्रकरणेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते" ॥

"गृहे सम्पूर्ण आचारः ग्रामे च तदर्धकम् ।
तदर्धं तीर्थयात्रायां पथि शूद्रवदाचरेत्" ॥ इति च ।

कौटिलीये तु 'तीर्थगमनाय जीवत्पुत्रां गच्छेत्' इति पाठे, जीवत्पुत्रां सहधर्मिणीं पतिरनुगच्छेदित्यर्थः । तथैवार्थशास्त्राकारेऽन्यत् पुस्तकमस्ति । 'तीर्थगमनाय पुत्र सुतामधिगच्छेत्' इत्थं पाठभेदे नार्थकाठिन्यम् । तॄ प्लवनतरणयोः, तीर्थ्यते अनेन । 'पा-तॄ-तु-दि' इत्यादिना थक् ॥ १०६ ॥

सतीर्थ्याभिगमने ब्रह्मचर्यहानमाह नेति । स तीर्थाभिगमनात् सतीर्थ्यायाः एक गुरुसन्निधौ अन्येन सहाधीतविद्यायाः अभिगमनात् सङ्गमनात् तदासेवणाद् वा ब्रह्मचर्यं नश्यति, धर्मशास्त्र-

न परक्षेत्रे बीजं विनिक्षिपेत् ॥ १०८ ॥

इति चाणक्य-सूत्रे नीतिदर्शननामके चतुर्थोऽध्यायः ॥४॥

—००—

---

विरोधात्। 'सतीर्थ्यास्त्वेकगुरवः'। समानं तुल्यं तीर्थं शास्त्रं गुरुर्वा येषा ते सतीर्थाः। 'निपानागमयोस्तीर्थम् ऋषिजुष्टजले गुरौ' इत्यमरः। तीर्थपदनिरुक्तिः प्रागुक्ता। 'न सतीर्थाभिगमनात्' इति पाठभेदे। सतीर्थस्य सतीर्थाया वा अभिगमनात् सङ्गमनात्। ब्रह्मचर्यमष्टाङ्गमैथुनत्यागरूपं न नश्यति न विलुप्यते। परमयं पाठः धर्मशास्त्रविरुद्धत्वादुपेक्षणीयः। व्यवहारविरोधाच्च। उक्तञ्च—

"अपेत व्रतकर्म्मा च केवलं ब्रह्मणि स्थितः।

ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते" ॥

तदर्थं योगसूत्रम्। 'ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः'। श्रुतयश्च 'ब्रह्मचारी गृही भवेत्'। 'अथ ब्रह्मचर्यम्'। 'इतरथा ब्रह्मचर्यादेव प्रव्रजेत्'। प्राग्विद्याभ्यासकाले ब्रह्मचारी, तत्समाप्तौ पश्चाद्गृही भवेत्। गीतायामपि—

"ब्रह्मचर्यमहिंसा च शारीरन्तप उच्यते"।

तीर्थ्यमिति पाठः साधुरिति केचनाहुः। तदा समाने तीर्थे वसन्ति 'समाने तीर्थे वासी' इत्यनेन यत्। 'तीर्थे ये' इति समानस्य सः। ब्रह्म वेदः तयोर्ज्ञानं वा चरति अर्ज्जयति। ब्रह्मणि वेदे सत्ये च चरणमिति ब्रह्मपूर्व्वक चरधातोः 'गदमदचरयमश्चे'त्या-

दिना यत्। 'न कल्बविभवात् ब्रह्मचर्य्यं नग्नति' इत्येवं पाठो विदुषां केषाञ्चित् मन्यतः। स च धर्म्मशास्त्राविरुद्धः॥ १०७॥

अन्येषां क्षेत्रे बीजार्पणनिषेधमाह नेति। परेषामन्येषां क्षेत्रे दारेषु बीजं बिन्दुं वीर्य्यंञ्च। नापि मोहात् प्रमादाद्वा विनिक्षिपेत् परित्यजेत्। यद्वा परेषां क्षेत्रे सतुस्वामिन्य विशिष्टे सस्यादिजननोपयुक्तस्थाने बीजमङ्कुरकारणं न निक्षिपेदेवारोपणं कुर्य्यात्।

'क्षेत्रं शरीरे केदारे सिद्धस्थान कलत्रयोः' इति विश्वः। यदि केनापि परक्षेत्रे बीजवपनं क्रियते तदा तेनापि यतुः क्षेत्रे पुनर्बीजनिक्षेपः करिष्यते चेत्तेन महाननर्थो विवादश्च स्यात्। क्षि क्षये, क्षि निवासगत्योश्च, क्षीयते धान्यादि। सत् ग्रौणादिक-ष्ट्रन्। 'बीजं तु रेतसि। स्यादाधाने च तत्त्वे च हेतावङ्कुर-कारणे' इति विश्वः। बीजम्। ईज गतिकुत्सनयोः, विशेषेण ईज्यते। विपूर्व्वात् ततोऽच्। बीज्यते वा वयवोरभेदाद् घञा सिद्धम्। कुलत्वं न भवति। 'चजो'रित्यादिसूत्रे 'निष्ठाया-मनिटः' इति वार्त्तिककरणा पूरितत्वादस्य च धातोर्निष्ठाप्रत्यये सेट् त्वादिति॥ १०८॥

अपारे दुस्तरेऽगाधे संसारे सार-बुद्धिना।
चाणक्यमसि-पोतेन तीर्य्यतां स विपश्चिता॥

इति दर्शनभूतनाथवासुभाष्यायां श्रीईश्वरचन्द्रशास्त्रिणाग्रे-कृतायां सारार्थबोधिन्यां चतुर्थोऽध्यायः॥४॥

—०३०—

## पञ्चमोऽध्यायः ।

## पुत्रार्था हि स्त्रियः ॥ १ ॥

पूर्व्वाध्याये विषयान्तरमुक्त्वास्मिन् पञ्चमाध्याये दाराणां विधेयत्वमाह पुत्रेति । स्त्रियः पत्न्यः पाणिगृहीत्यः इति । पुत्रार्थाः पुत्रोऽर्थः प्रयोजनं यासां ता भवन्तीति शेषः । अत्र स्त्रीशब्देन पत्न्येव ग्राह्या । सातु विवाहिता धार्म्मिकापत्योत्पादने समर्था ना विवाहिता । दम्पत्योः यज्ञाधिकारात् । पत्युर्यज्ञे संयोगो यया सा पत्नी । तथा च सूत्रम् 'पत्युर्नो यज्ञसंयोगे' । उक्तञ्च—

"पुत्रार्थे क्रियते भार्य्या पुत्रः पिण्ड-प्रयोजनः" ।

एवमन्यत्रोक्तम्—

"रति-पुत्र फला दाराः दानभुक्ति-फलं धनम्" ।

न ताः केवलं सुखभोगार्थाः । अपरञ्च—

"भार्य्यावन्तः क्रियावन्तः सततं गृहमेधिनः ।

भार्य्यामूलं कुलं सर्वं तस्माद् भार्य्या परा गतिः" ॥

—'योषितायां बह्वः प्रजाः पुरुषात् सम्प्रसूताः' इति मुण्डके । 'आत्मजस्तनयः सूनुः सुतः पुत्र' इत्यमरः । पुत्रः । पुन्नाम्नो नरकात् त्रायते इति । पूञ् पवने, पुनाति । 'सुपि' कप्रत्ययः ।

**स्व-दासी परिग्रहो हि स्व-दासभावः ॥ २ ॥**

**उपस्थित-विनाशः पथ्यवाक्यं न शृणोति ॥३॥**

---

यद्वा पूयते च, 'पुवो ह्रस्वश्च' इति कमलयः । 'स्त्री वधूर्योषिता रामा' इति त्रिकाण्डशेषेऽपि । स्त्यायति गर्भोऽस्याम् । 'स्त्यायते-र्ड्रट्' टिलोपः यलोपश्च 'टिड्ढा' इति ङीप् । प्रागुक्तमन्यत् ॥ १ ॥

सेविकापरिग्रहे स्वस्य विनाशमाह स्वेति । स्वस्यात्मनः । दासी भुजिष्या परिचारिका इति यावत् । तस्याः परिग्रहो दार-त्वेन सम्भोगपात्रत्वेन च स्वीकारः । हि निश्चितं तेन स्वस्य च दासभावः सेवकत्वेन नीचत्वमिति । उक्तञ्च—

"हीयते हि मतिस्तात ! हीनैः सह समागमात्" ।

इति । यथा क्षीरं पर्युषितदुग्धयोगाद् झटिति दधित्वमेति । यदि तात आत्मनः नीचत्वमिच्छति तादृगाचरणेन स्वात्मावन-तिर्नीकारकर्त्तव्य, मतिमता तत्त्याज्यम् ।

"परिग्रहः कलत्रे च मूल स्वीकारयोरपि ।

शपथे परिवारे च राहुग्रस्तस्य भास्करे" ॥ इत्यजयः ।

'दासी चाणाड्भुजिष्ययोः' इति मेदिनी । दसु उपक्षये, दस्यते । कर्मणि घञ् । गौरादित्वात् ङीप् ॥ २ ॥

प्रत्युपस्थितविनाशस्तस्य पुंसो हितवाक्याश्रवणे प्रवृत्त्यभाव-माह उपेति । उपस्थिते सम्प्रति काले विनाशसम्भवो यस्य सः । यद्वा उपस्थितस्य विषयस्य वर्त्तमाने उच्छेदोऽस्यास्तीति धर्म्मा-द्यादित्वादच्या सिद्धः । तादृशो जनः पथ्यं हितं समुचितञ्च

## नास्ति देहिनां सुखदुःखाभावः ॥ ४ ॥

---

वाक्यं न शृणोति । नाकर्णयति । एवं बुद्धेर्वैपरीत्येऽपि हित-जनकं सद्वाक्यं न शृणोति । उक्तञ्च—

"दीपनिर्वाण-गन्धञ्च सुहृद्वाक्यमरुन्धतीम् ।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति प्रमत्तकाः" ॥

अत्र 'प्रमत्तका' इत्यत्र 'गतायुष' इति पाठान्तरमस्ति । अन्यच्च 'विनाशकाले विपरीत-बुद्धिः' । अपरञ्च—

"प्रायः समापन्न विपत्तिकाले
धियोऽपि पुंसां मलिना भवन्ति" ।

पथोऽनपेतं पथ्यम् । 'धर्मपथ्यर्थन्यायादनपेते' इत्यनेन यत् । 'पथ्या स्त्री हरितक्याञ्च पथ्यं हिते त्रिषु' इति मेदिनी वाक्यम् । उच्यते इति वच् धातोर्ण्यत् । 'चजोः' इति सूत्रेण कुः । 'वचोऽशब्दसंज्ञायां' इति वचेः कुत्वनिषेधात् वाच्यमिति । शब्दसंज्ञायान्तु कुप्रत्ययाद् वाक्यम् ॥ ३ ॥

शरीरभाजां मनुजादीनां सुखदुःखयोरवश्यम्भावित्वमाह नेति । देहिनां शरीरधारिणां जीवानामिति । सुखमनुकूल-वेदनीयम् । दुःखं प्रतिकूलवेदनीयम् । एतयोरभावः कदापि नास्ति । काले कस्मिन् सुखं कस्मिन् वा दुःखमस्त्येव । देहस्य तयोः स्वाभाव्यात् । कविसमयश्च—

"अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते" ॥ इति ।

**मातरमिव वत्साः सुखदुःखानि कर्त्तारमेवानुगच्छन्ति ॥ ५ ॥**

---

'त्रिविधं दुःख'मिति कापिलं सूत्रम्। बुद्धदेवोऽप्याह जगति 'सर्वं दुःखम्' इति।

"कायो देहः शरीरञ्च मूर्त्तिः पिण्डः तनुस्तथा"।

दिह उपचये, दिह्यते। घञा सिद्धम्। सुखदुःख तत्क्रियायाम्, सुखयति। दुःखयति च। द्वे पचाद्यचा सिद्धे। यद्वा सुष्ठानि खानीन्द्रियाणि यस्मिन् विषये देहे च। दुर्निन्द्रियं खनति वा। तदा 'अन्येभ्योऽपि' इत्यादिना डः प्रत्ययेन दुःखमिति सिद्धं स्यात् ॥ ४ ॥

सुखदुःखयोः पुरुषानुसरणमाह मातरिति। यस्मात् वत्साः शिशवः। मातरं जननीमिव यथा। ते रक्षणाय प्रवृत्तिमनुधावन्ति। तद्वत् सुखानि दुःखानि च तत्तत्कर्तारं सुखदुःखभोक्तारमेवानुगच्छन्ति अनुसरन्ति। ये ययोः सुखदुःखयोर्भोक्तारः ते तयोरुत्पादकाः। स्वस्वकर्मार्जितं भुज्यमानं फलं सुखम् दुःखञ्च सम्यगात्मनोऽप्यनुभवनीयम्। उक्तञ्च शास्त्रकृद्भिः—

"यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथैवात्मकृतं कर्म कर्त्तारमनुगच्छति" ॥

भट्टरूपेणेत्यर्थः। अध्यात्मसंज्ञके रामायणे च—

"सुखस्य दुःखस्य न कोऽपि दाता,
परो ददातीति कुबुद्धिरेषा"। इति प्रागुक्तम्।

तिलमात्रमप्युपकारं शैलमात्रमिव मन्यन्ते साधवः ॥ ६ ॥

---

अन्यच्च—"चक्रवत्परिवर्त्तन्ते दुःखानि च सुखानि च"। पुरुषस्येति सम्बन्धः। दुःखलक्षणं न्यायदर्शने 'बाधना लक्षणं दुःखम्' इति। सुखस्य लक्षणं किमपि न्यायसूत्रकारैर्न कृतम्। नवीनैर्दुःखाभावरूपत्वेन तत् स्वीकृतम् ॥ ५ ॥

परोपकारस्वीकारे साधूनामवश्यकर्त्तव्यत्वमाह तिलेति। तिलमात्रं तिलपरिमितम्। बिन्दुमात्रमत्यल्पमपीत्यपिना सूचितम्। उपकारं हितमानुकूल्यमिति। साधवः महात्मानः ज्ञान ध्यान विद्या निपुणाः। शैलमात्रं गिरिपरिमितम्। अमितं महार्घं वा। मन्यन्ते स्वीकुर्व्वन्ति। असाधवस्तु हिमशैल-परिमितमुपकारं सर्षपमितं जानन्त्यविवेकात्। एष एव साध्व-साधु प्रभेदः। अतः साधूनामुपकार-कारणे सर्वे प्रचेष्टिताः भवन्ति। उक्तञ्च—

"उपकारशतेनापि दुर्जनः केन गृह्यते।
साधुः सम्मानमात्रेण भवत्येवात्मविक्रयी"॥

इति राजनीतौ। प्राङ्निरुक्तः साधुशब्दः। 'उपकारो हितमानु-कूल्यमिति' प्राञ्चः। उपकरणमुपकारः। उपपूर्व्वात् करोतेर्घञ्। 'शैलो भूभृति शैलन्तु शैलेये तार्क्ष्ये शैलकं' इति हैम.। शिलाः सन्ति अत्रेति शिलाशब्दात् 'ज्योत्स्नादिभ्योऽण्'। तिल स्नेहने, तिलति। इगुपधत्वात् कः ॥ ६ ॥

उपकारोऽनार्य्येष्वकर्त्तव्यः ॥ ७ ॥

प्रत्युपकारभयादनार्यः शत्रुर्भवति ॥ ८ ॥

---

अनार्य्याणां हीनजनानामुपकारकरण-निषेधमाह उपेति। अनार्य्येषु शबरकिरातपुलिन्देषु। यद्वा नीच-पामर-लम्पट-धूर्त्तेषु। उपकारो हिताचरणमिति। अकर्त्तव्योऽविधेयः। यतस्ते तु क्रूराः मूढ़ा मायावन्तो हेटारश्चेति। तेषां हितानुष्ठाने विपदुद्धरणेऽपि प्राणिनामपि प्रत्युपकारकरणम्, परमहिताचरणं करिष्यन्त्येव। अतस्तेषूपेक्षामाचरेत्। ननु मैत्री-करुणा-मुदिताः। अनार्य्याः—

"भेदाः किरात-शबर-पुलिन्दा म्लेच्छजातयः"।

इत्यमरकोषः। अन्ये तु 'कुमारिका खण्डवहिर्गताः वर्णव्यवस्थारहिता अनार्य्या.' इत्याहुः। अन्यत्पूर्व्वमुक्तम्। परस्परोपकार्य्योपकारित्वं विना सामाजिकोन्नतिः कार्य्यसम्पदिव नशात्। ऋ गतौ, अर्य्यते। अर्त्तुं योग्यो वा। 'ऋहलोर्ण्यत्' इत्यादिना सिद्धम्। आर्य्यविरुद्धोऽनार्य्यः। कुत्रचित् 'उपकारो नास्तिकानादरेषु कर्त्तव्य.' इत्थं सूत्रान्तरमस्ति। तदा तु कार्य्यासम्भावविशेषे दयया तेषूपकारः कर्त्तव्यो नापि सर्व्वदा इत्यर्थः ॥ ७ ॥

अतिक्रूरस्वभावत्वेन प्रत्युपकारमसहमानोऽनार्य्यो वैरं करोति इत्यत आह प्रतीति। उपकर्त्तुर्विपदुद्धारणं प्रत्युपकारः अति-महायकत्वमिति यावत्। तद्भयात् प्रत्युपकारकरणभया-

**स्वल्पमप्युपकारकृते प्रत्युपकारङ्कर्त्तुमार्य्यो न स्वपिति ॥ ९ ॥**

---

इनार्य्यः शत्रुरराति: स्यात्। स च विपरीतबुद्धया प्रवञ्चकतया अतः सततनिष्टमाचरति। यथा भुजगो दुग्धं निपीय गरलं वमति तद्वत्। सज्जनो नैव तादृक् करोति। तदुक्तं नीतौ—

"उपकारशतेनापि दुर्जनः केन गृह्यते"।

न केनापि ग्रहीतुं शक्यते इत्यर्थः। अत उक्तं—

"दुर्जनः परिहर्त्तव्यः सद्गुणैर्मण्डितोऽपि सन्"। इति।

उप अधिकं करोतीति कर्मण्यण्। यद्वा उपकरणमुपकारः उपपूर्व्वात् करोतेः घञा सिद्धः ॥ ८ ॥

आर्य्यस्य प्रत्युपकारकरण स्वाभाव्यमाह स्वल्पमपीति। आर्य्य सत्यनिष्ठः कुलीनो न्यायपरायणः। स्वल्पमपि उपकारम् इत्कृता पुंसा तेन कृते उपकारे प्रत्युपकारं प्रतिहिताचरणं कर्त्तुम्। न स्वपिति। शिष्टस्वाभाव्यात् नैव निद्रां याति। परं प्रत्युपकाराय आर्य्यः सततं जागर्त्तीति भावः। 'स्वल्पकृतमप्युपकारं प्रत्युपकर्त्तुमार्य्यो न स्वपिति'। इत्थं पाठभेदेऽप्यार्थो विशद एव। 'किञ्चिदल्पं क्षुद्रमितं स्तोकमात्रमिति'। 'स्तोकाल्पक्षुल्लकाः' इत्यमरोऽपि।

"हितानुकूलोपकाराय साहाय्ये दुःसहाः सदा"।

स चोपकारः आर्थिक शारीरिक याचनिक मानसिकभेदेन

न कदापि देवता अवमन्तव्या ॥ १० ॥

न चक्षुःसमं ज्योतिरस्ति ॥ ११ ॥

---

चतुर्विधः। धनदानेन, परिचर्य्येण, हितवादेन, इष्टचिन्तया चेति ॥ ८ ॥

देवानां गुरूणाञ्चापमानकरणनिषेधमाह नेति। कदापि कस्मिंश्चित्काले देवता देवा अमराः। तादृशा लोकाश्च। ते नावमन्तव्याः। अत्र देवता इत्युपलक्षणम्। अन्ये गुरवस्तथा लोकाः तादृशानि कार्य्याणि च ज्ञेयानि। केनापि पुरुषेण ते नावमन्तव्याः प्रमादादस्माद्वा गुरुकोऽप्यत्र न लङ्घितव्याः। देवतातुल्य-लोक-तत्कार्य्याणामवमाननं कदापि न कार्य्यमिति सारः। तत्करणे तस्य परस्य च हानं स्यात्। तथा च 'न च दैवात् परं बलम्' इति। 'न कदाचिद्देवतान्यवमन्तव्यानि' इति एव पाठे तु दैवो नृपो गुरुजनश्च। एतेषां ये आदेशाः यानि च कार्य्याणि तानि नावमन्तव्यानीति। तदात्वे सुनिश्चा सदाचरणहानिः स्यात्। दैवमन्यात् स्थायि तत् ॥ १० ॥

भासमाना नेत्रज्योतिभिः सममन्यज्ज्योतिर्नास्तीत्याह नेति। चक्षुर्नयनं नेत्रमिति दर्शनेन्द्रियमिति च कथ्यते। चक्षु दर्शने तत्समं तुल्यमन्यज्ज्योतिर्वस्तु रूपग्रहणनिमित्तं नास्ति। चक्षुरिन्द्रियेण लोको हि सर्वं द्रष्टुं शक्नोति। यस्य तु तन्नास्ति स चान्धः बहिरनन्तसौरालोकेन किमपि द्रष्टुं नार्हति

## चक्षुर्हि शरीरिणां नेता ॥ १२ ॥

विनापि दर्शनशक्त्या । अतश्चक्षुर्महता यत्नेन रक्षणीयम् । तदुक्तं नीतौ 'न नेत्रहीनः कनकाचलङ्घतः' इति । रससेवन-शोणित-शुक्र-विकृत्युदरामय-पैतृक-संक्रामक-रोगादि-दोषैर्नेत्रस्य दृष्टि-हानिः प्रजायते । अन्यदपि वैद्यके माधवकरीये निदाने च । 'नेत्रमीक्षणनयने चक्षुर्दर्शनमक्षि च' इति कोषः ॥ 'चष्टे' चक्षते-ऽनेन वा । चक्षिङः धातोः 'चक्षेः शिच्च' इत्यौणादिकसूत्रादुसिः शित्वा दन्तादिधातुकत्वात् ख्याञादेशो न भवति ॥ ११ ॥

पूर्वसूत्रे नेत्रज्योतिषः श्रेष्ठत्वमुक्ता अस्मिन् सूत्रे जीवाना-मस्य नेतृत्वमाह चक्षुरिति । चक्षुर्लोचनमिति । शरीरिणां प्राणिनां सर्वेषाम् । हि निश्चितम् । नेता नायकः । सर्व-कार्मसु दर्शनशक्त्या प्रेरकोऽन्धकारे आलोके च परिचालकः । यस्य चक्षुषी नस्तः सोऽन्धः । यस्यैकं चक्षुर्नास्ति सः काणः । यथा हि नेता सर्वान् कर्मचरान् हितकरकर्मसु चालयति तथा चक्षुर्दृष्टिमतः लोकान् जगति स्वशक्त्या रूपग्रहणादौ प्रेरयतीति भावः । शरीरान्तः सूक्ष्मस्नायु-प्रवाहिताक्षिगोलका-न्तर-कृष्णतारकाग्रवर्त्ति-रूपग्रहण तेजोवत्त्वं चक्षुस्त्वमिति । पित्तादिवैषम्ये ओजःचये मस्तिष्कचये च चक्षुर्दर्शनशक्तिहानं स्यात् । तथा च वैद्यके—

> "तथा ऋतूनाञ्च विपर्य्ययेण,
> शोकाभिघातादतिमैथुनाच्च ।

**अपचक्षुषः किं शरीरेण ॥ १३ ॥**

**नाप्सु मूत्रं कुर्य्यात् ॥ १४ ॥**

---

बाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च,
नेत्रे विकारान् जनयन्ति दोषाः" ॥

मांस-विमलतोर-नवनीत-प्रविभक्तेन सच्छक्तिर्नेदरे । 'ज्योति-रग्नौ दिवाकरे । पुमान्, नपुंसकं दृष्टौ व्याख्यया प्रकाशयोः' इति मेदिनी ॥ १२ ॥

दर्शनशक्तिशून्य चक्षुषो जनस्य शरीरधारण-भारो दुर्व्विषह इत्याह अपेति । अपचक्षुषः दर्शनशक्ति-विरहित-नेत्रस्य । शरीरेण देहेन किम् । तेन न किमपि कार्य्यं सिध्यति । वाहक-विशेषे यानमिव भवति । तदुक्तं विष्णुना—

"काणेन चक्षुषा किंवा चक्षुः पीडैव केवलम्" ।

चक्षुर्यदन्येषामपि करणानामपाटवे तद्वैकल्यं स्यात् । तथाच—

"बाधिर्य्यं कुणितान्ध्यत्व जड़ता जिघ्रता तथा ।
मूकता कौण्य-पङ्गुत्वं क्लैब्योदावर्त्तमन्दताः" ॥

इति तत्त्वकौमुद्या ज्ञानकर्म्मेन्द्रियाणां शक्तिहानमुक्तम् । अपचक्षुस्त्वमाह वैद्यके—

"वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः ।
प्रायेण जायते घोरः सर्व्वनेत्रामयाकरः" ॥

अपचक्षुषः सकलवस्तुदर्शनविरहेण शरीरभारः क्लेशप्रद इति । पदनिरुक्त्यादिकं पूर्व्वमुक्तम् ॥ १३ ॥

न नग्नः प्रविशेज्जलम् ॥ १५ ॥

---

सम्प्रति विषयान्तरमवतारयन् सलिले मूत्रत्यागपरिहारमाह नेति । अप्सु सलिलेषु । स्वभावतः स्वच्छे वारिणि मूत्रं प्रस्रावः उपस्थ-निर्गतवारि । न कुर्यात्तत्त्यजेदित्यर्थः । तदुक्तं धर्म्मशास्त्रकृता मनुना—

"न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां नच पर्वते ॥
न जीर्णदेवायतने न वल्मीके कदाचन" । इत्यादि ।

देहनिर्गतदुष्टपदार्थलेन च जलं दुष्टं विषाक्तं भवति । तत्पाने रोगोत्पत्तिः स्वास्थ्यनाशश्च । एवं राजमार्गे देवालये गोष्ठे परिषदि वासगृहे श्मशाने तीर्थे विचार-विद्यागारे मूत्रं न त्यजेत् । नच तद्वेगधारणं कुर्य्यात् । तद्वेगधारणे रोगसम्भावना प्रबला । दण्डायमानस्य वारिपाने मूत्रत्यागे च मुष्कस्फीत्यरोगो भवति । गोमूत्रस्य निक्षेपे मूत्र-दुर्गन्धमयस्थाने तद्दियदोषं नश्यति । मूत्र प्रस्रवणे, मूत्रति । ततो घञ् । अप्स्विति । आप् व्याप्तौ, आप्नुवन्ति आप्यन्ते वा । 'आप्नोतेर्ह्रस्वश्च' इति क्विप् । ह्रस्वत्वञ्च ॥१४॥

अपरिहिताम्बरस्य जलप्रवेशे जलजन्तुदंशनभयात्तन्निषेधमाह नेति । नग्नो विवसनो जलं वारि । न तस्मिन् विशेत् नापि निमज्जेत् अवगाहेत । तादृशजनस्य जलावमज्जने जलजावैराक्रमणसम्भवः सलिलस्वच्छतापि विनश्यति । एवं नग्नः सन्

## यथा शरीरं तथा ज्ञानम् ॥ १६ ॥

## यथा बुद्धिस्तथा विभवः ॥ १७ ॥

---

मार्गे गमनं भोजनं शयनमपि न कुर्यात् । 'नग्नो वन्दि-क्षपणयोः पुंसि त्रिषु विवाससि' इति विश्वः । कौर्मे च—

"न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ।
न च मूत्रं पुरीषं वा न च संसृष्टमैथुनम् ॥
नोच्छिष्टं संस्पृशेच्चित्यं न नग्नः स्नानमाचरेत् ।
न गच्छेन्न पठेच्चापि न चैव स्वशिरः स्पृशेत्" ॥ इति।

घोलनम्ओ घोङ् लज्जते । अकर्मकत्वात्तत्र क्तः । 'घोटितम्' इत्यनेन मतं स्यात् ॥ १५ ॥

शारीरिकशक्त्यनुसारि-ज्ञानमाह यथेति । यथा यादृशं शरीरं देहस्य सामर्थ्यञ्च तादृक् । तथा ज्ञानमपि विषयेन्द्रियसन्निकर्षजन्यं यथार्थं लोकस्य भवति । शरीरपरिमाणान्नाधिकं न वा न्यूनम् । यद्वा ज्ञानं बुद्धिः । शरीरे पुष्टे सम्यक् सुस्थे ज्ञानमपि प्रखरं पुष्टञ्च भवति । विपुष्टे क्षीणे रुग्णे च ज्ञानञ्च तथैव प्रकाशते, शारीरिक नैरुज्याज्ज्ञानं वर्धते । तज्ज्ञानं नानाविधम् । यथा-विषयज्ञानम् । शिल्पशास्त्रयोर्विज्ञानम् । पदार्थतत्त्वसूक्ष्मयोर्दर्शन तत् संयोगवियोगाभ्यासाभिनवत्वाविष्करणं विज्ञानम् । ईश्वरविषये तत्त्वज्ञानम् । अतस्मिन् तद्बुद्धिर्मिथ्याज्ञानञ्च । 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति सर्वथा ज्ञानप्रागल्भ्यमुक्तम् । ज्ञा अवबोधने । जानातेः करणे ल्युट् ॥१६॥

## प्रज्वलितमग्निं न निक्षिपेत्॥ १८॥

लोकानां बुद्ध्यनुसारेण विभव. स्यादित्याह यथेति। बुद्धिः धीशक्तिर्मनीषेति। सा यस्य यादृशी भवति, प्रखरा मलिना वा। तस्य विभवः सम्पत्तिर्विपुलधनं लोके तादृशं भवति। मतिमान् स्वमति-प्राखर्य्यात्तद्बलेनाधिकं धनमर्जयति। मति-हीनः सञ्चितमपि वित्तं परिहरति। तदुक्तं कौटिल्यैरस्यावसाने—

'बुद्धिरेव जयत्येका पुंस. सर्व्वार्थसाधिनी।

यद्बलादेव किं किं न चक्रे चाणक्यभूसुरः'। इति।

शिक्षासौशील्य-सत्सङ्गैः लोकस्य बुद्धेः प्राखर्य्यम्। तेन धन-मानादेरागम. सुकरः स्यात्। मूढस्य न तत् स्यात्। 'बुद्धि-र्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः। बुधिर् बोधने, बुध्यते अनया इत्यतः क्तिन्। विपूर्व्वाद् भवते रचा विभव इति॥ १७॥

प्रज्वलिताग्नौ पुनरग्निनिक्षेपस्य निषेधमाह अग्नाविति। अग्नौ वह्नौ वैश्वानरे च। प्रज्वलिते पुनरग्निनिक्षेपणं वृथा भवति। तद्द्विगुणः सन् स्वस्यान्यस्य च दाहं करिष्यतीति। यद्वा जले जलप्रक्षेपवत्तस्य वैयर्थ्यञ्च। अथवा पानोन्मत्तस्य रागा-न्धस्य च पानसाहाय्यं क्रोधवर्द्धनञ्च यथा नोचितन्तथा पुनरग्ना-वग्निक्षेपो नोचित इति। 'अग्निर्वैश्वानरो वह्निः' इत्यमरः। अग्नि.। अगि गतौ, अङ्गति। ततोऽङ्गेर्नलोपश्च। इत्यौणा-दिकान्निर्न लोपश्चेति। क्रुद्धस्य क्रोधशान्तये, सुरासक्तस्य च तन्निवृत्तौ सदा यतितव्यं न तद्वर्द्धनाय। तदुक्तम्—

परदारान् मनसापि न गच्छेत् ॥१६॥

तपस्विनः पूजनीयाः ॥२०॥

---

"कामिनीं धर्षयन् कामान् लोभं सुखस्य वर्धयन्।

नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन्" ॥

नीतौ चैवमेव प्रगल्भतम् ॥ १८ ॥

सम्प्रति विषयान्तरोदाहरणच्छलेनाह परेति। परेषां लोकानां दारान् पत्नीः पाणिगृहीतीरिति। मनसा चित्तेन सङ्कल्पा सङ्कल्पालोचनप्रसङ्गेन च। यद्वा रिरंसया रूपलावण्य-सौन्दर्यचिन्तया च न गच्छेत् नाभिरमेत्। सर्वेन्द्रियव्यापारा-मनोव्यापारपूर्विका भवन्तीत्यत उक्तं मनसेति। मानसिक-चिन्तयैन्द्रिय-चाञ्चल्य सम्भावना तच्छान्तिहानश्चेति। उक्तञ्च राजनीतौ—

'परीवादं परस्त्रेकां परदाराभिमर्षणम्।

परपेऽमपि पापस्य न कुर्वीत कदाचन' ॥ इति।

मन्यन्यानि धर्मशास्त्रे प्रतिषेधसूचकवचनानि। तत्कृते स्वास्थ्य-सत्य-चरित्र-चित्तप्रागल्भ्यानां हानमवश्यं स्यात्। दारा, दृ विदारणे, दारयन्ति भ्रातॄन् इति निजन्तः। 'दारजारौ कर्त्तरि णिलुक् च' इति वार्त्तिकाद् घञ्। मन ज्ञाने, मन्यतेऽनेनेति असुन्। तेन मनसा ॥ १६ ॥

परमेशध्यानपरायणानामाराधनेन कल्याणमाह तपस्विन इति। तपस्विनः सन्न्यासिनो योगिन इति। ईदृशा ये, ते

## अन्नदानं भ्रूणहत्यामपि मार्ष्टि ॥ २१ ॥

---

लोकानां पूजनीयाः अर्हणीयाः भक्तिभाजना इति यावत्। ननु वेशमात्रधारिणः केवलं गैरिक-काषायाम्बरधारिणः। यथार्थ साधवः कल्याणाय तपसः षड्भागं लोकेभ्यो वितरन्ति। तेषां तपश्चरणेन आशिषा च सामाजिका निरापदो भवन्ति। अतः सन्यासिनो महनीयाः। यत्र तपश्चरन्ति तत्र तपो माहात्म्यात् भुजग नकुलयोर्विरोधाभावः। देशस्तु चौभरहितः आधिव्याधिहीनः शान्तिपूर्णः स्यात्। तदुक्तं मार्कण्डेयपुराणे—

"प्रशान्त-श्वापदाकीर्णं मुनि-शिष्योपशोभितम्"।

मुनिवर्य्यस्य मेधसस्तपोवनमीदृशमासीदित्यर्थः। तपस्वि-भिक्षु-दण्डि प्रभृतीनां दर्शनेन पुण्यं प्रजायते। बुद्धिरपि ताहशी समुदेति। 'तपस्वी तापसे चानुकम्प्ये' इति मेदिनी। तपः कृच्छ्र-चान्द्रायणादीनि कर्म्माणि। तदस्यास्तीति 'तपः सहस्राभ्याम्' इति विनिः॥ २०॥

अन्नदानमाहात्म्यमाह अन्नदानमिति। अन्नानां क्षुन्निवर्त्तकादनीयद्रव्याणां दानमन्यस्मै वैधार्पणम्। देवविप्र ब्रह्मचारि-विद्यार्थिसाधु-दीनान्धातुर-पङ्गु-निःसहायेभ्यो निजधनस्य प्रीत्या समर्पणम्। तथा च श्रुतिः 'दानेन द्विषन्तो मित्रा भवन्तो'ति।

"अन्नेन धार्यते सर्वं जगदेतच्चराचरम्।

अन्नदानात् परं दानं न भूतं न भविष्यति" ॥

## न वेद-बाह्यो धर्मः ॥ २२ ॥

---

"अन्नी मन्नगत-प्राणाः न बुद्धिरन्नजीवनम्" ।

'अन्नाद्भवन्ति भूतानि' । 'दृष्टेरन्नं ततः प्रजाः' । इत्यादि स्मृतयः । अन्न-गुणाश्च 'तुष्टि-बल-प्रीति-पुष्टिधात्विन्द्रियबलकारित्वं जीवनप्रदत्वं गुरुत्वं क्षुधाक्षय-रोग-श्रम-कार्श्यनाशित्वं पथ्यत्वञ्चेति । पुराण-नवीना-गौल-प्रभृतिभेदेन अन्नानां गुणतारतम्यमस्ति । सान्निपातादिनाशित्वं नैरुज्यकरमायुर्वर्धकत्वञ्चेति । भ्रूणस्य गर्भस्य हननं विनाशः । तज्जनितं पापमपि माष्टि । अवदानेन तत् प्रणश्यति । अद् भक्षणे, अदने । अदः क्वप्रत्ययः । 'अन्नाण्' इति निपातनात् सिद्धम् । 'बहुलं छन्दसि' इति वार्त्तिकाद् अदः स्थाने न जग्धिरादेशः । 'भ्रूणो गर्भेऽर्भके क्लीबे स्त्री पतन गण्डके' इति मेदिनी । 'भ्रूण आशा विशङ्कयोः' इत्यन्यत्र च । भूणाति, घञा सिद्धः । सूत्रादौ 'अन्ना पवित्रमिति' क्वचित् पाठः । सूत्रार्थः सुगमः । २१ ॥

धर्मस्य वेदबाह्यत्वे निषेधमाहनेति । वेदाश्चत्वारः । ऋग्-साम-यजुरथर्वाणः । तेषां शिक्षादयोऽङ्गानि षट् । उपवेदाश्चत्वारः । आयुर्वेद-धनुर्वेद-गान्धर्वार्थशास्त्राणि । एते साङ्गोपाङ्गवेदाः । स्मृतीतिहासपुराणानि वेदमूलकानीति । एभिर्भवो बाह्यः । वेदेभ्यो बाह्यो वेदबाह्यः । वेदविरुद्धः । तादृशो धर्मो नाचरणीयः । वेदमूलको धर्मोऽनुष्ठेयः । तथाच—

"वेद-प्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः" । इति ।

## न कदाचिदपि धर्म्मं निषेधयेत् ॥२३॥

मनुना च—"या वेदवाह्याः स्मृतयः याश्च काश्च कुदृष्टयः"। वेदवाह्याः स्मृतयश्चार्वाकादीनां नास्तिकानाम्। सर्व्वेषां धर्म्मादिविषयाणां साङ्गोपाङ्ग-वेदमूलत्वेऽपि धर्म्म-दर्शन-चिकित्सा-ज्यौतिष-मन्त्र नीतिशास्त्राणां सिद्धान्तस्योद्देश्यगतपार्थक्यमस्त्येव। तेनैश्वरे कस्यापि विप्रतिपत्तिर्नास्ति। लोकविधारकोऽभ्युदय निःश्रेयससिद्धिप्रदो धर्म्मः। शास्त्रयोनित्वाधिकरणे ऋग्वेदादेः शास्त्रत्वमुक्तम्। गीतायाञ्च शास्त्रविध्यनुसारेण धर्म्मानुष्ठाने ऐहिकविशेषसुखं पारलौकिकपरागतिश्चोक्ता, तद्विरुद्धानुष्ठाने तयोरभावः। प्राङ्निगदितमन्यत्, कोप-पदमित्तो प्रागुक्त स्तः ॥ २२ ॥

धर्म्मविरुद्धाचरणे प्रतिषेधमाह नेति। धर्म्ममभ्युदय-निःश्रेयस-कारणं वेद-स्मृति-पुराणेतिहासविहितम्। कदाचिदपि क्रोध-द्वेषानादरभयेणापि यस्मिंश्चित्कालेऽपि। न निषेधयेत् नापि प्रतिषेधयेत्तद्विरुद्धाचरणं कुर्य्यात्। सदा तं कायमनोवाग्भिः सर्व्वकर्म्मस्वनुपालयेत्। तदुक्तं भारते विदुरनीतौ—

"न जातु कामान्नभयान्नलोभा-
द्धर्म्मं त्यजेज्जीवितस्यापि हेतोः"।

यतश्च 'धर्म्मेण हीनाः पशुभिः समाना'। धर्म्महीना लोका पशुवत् काम लोभ-क्रोधपरायणाः परस्परम् आक्रमन्ति निर्दयाः स्वार्थान्धाश्च स्युः तेन समाजेषु चिराशान्तिः। मनुना च—

स्वर्गं नयति सूनृतम् ॥२४॥

---

'एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति' ॥

सदा जीवितकाले यदि धर्मानुष्ठानेऽशक्तस्तदा कस्मिन्नपि काले-ऽप्ययमनुष्ठेयः । धार्मिकः सन्तुष्टः परहितरतो मान्यो लोके प्रशंसार्हश्च भवति । अधार्मिके विश्वासाभावः । 'कदाचिदपि धर्मं निषेवेत' इत्यपि पाठान्तरमस्ति । तदाऽपि कस्मिंश्चित्काले धर्माचरणं कुर्य्यात् । प्रागुक्तमन्यत् ॥ २३ ॥

प्राप्यधर्मसंरक्षणे प्रयोजनमुक्त्वा सम्प्रति सत्यफलमाह स्वर्गमिति । सूनृतं सम्यक् सत्यम् । तत्र धर्माचरणजनितं फलम् । सत्यपरं लोकं स्वर्गं निर्विशेषसुखस्वरूपमसमस्थानं नयति प्रापयति । तदुक्तं श्रुतौ—

'सत्यमेव जयते नानृतम्,
सत्येन पन्था विततो देवयान ।
येनाक्रमन्त्यृषयो ह्याप्तकामाः,
यत्र तत् सत्यस्य परमं निधानम्' ॥

काठके—

'स्वर्गे लोके न भयं किञ्चनास्ति,
न तत्र त्वं जरया बिभेति ।
उभे तीर्त्वा अशनाया पिपासे,
शोकातिगो मोदते स्वर्गलोके' ॥

## सत्याद्देवो वर्षति ॥ २८ ॥

---

ध्वस्यीयति । सत्यं यदि विलुप्तं स्यात् तदा सर्व्वमाकुलमेव भवति । तदुक्तं वृद्धचाणक्ये—

"सत्येन धार्य्यते लोकः सत्ये सर्व्वं प्रतिष्ठितम् ।
सत्यात् स्वर्गमवाप्नोति ह्यसत्येन विनश्यति" ॥

भारते राजधर्मे च—

"सत्यञ्च समता चैव दमश्चैव न संशयः ।
अमात्सर्य्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ॥
त्यागो ध्यानमथार्य्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र ! सत्याकारास्त्रयोदश ॥
कीर्त्तिर्यशश्च पुण्यञ्च पितृदेवर्षि-पूजनम् ।
आयो विविधा विद्या च सर्व्वं सत्ये प्रतिष्ठितम्" ॥

सर्व्वमन्यदाग्नेये वाराहे गारुड़े ब्रह्मवैवर्त्ते च पुष्कलमस्ति । विस्तरभिया त्वत्र नोक्तम् ॥ २७ ॥

सत्यपालनफलमाह सत्यादिति । सत्यपरायणा हि दान-यज्ञ-तप आदिभिर्देवाराधनं नियतं कुर्व्वन्ति । तेन देवः प्रसन्नः सन् काले वर्षति । तदुक्तं मनुना—

"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" ॥ इति ।

गीतायाञ्च—

'अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः' ।

 25178 

## नानृतात् परं पापम् ॥ २८ ॥

यज्ञधूमान्मेघा मेघाद्वृष्टिः वृष्टेरन्नं ततः प्रजाः । ज्योतिषे च—

"ग्रहाणामुदये चास्ते तथा वक्रातिचारयोः ।
प्रायो वर्षन्ति जलदा नृपाणामुद्यमेऽपि च" ॥

"वारिपूर्णां महीं कृत्वा पश्चात् संक्रमते गुरुः" ।

इति च तत्रैवास्ति ।

"देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये" ।

इति विश्वः । दीव्यन्तीति देवाः । पचादिषु पाठात्ततोऽच् ॥२८॥

अनृतस्य पापजनकत्वमाह नेति । अनृतं न ऋतमनृतम् । अनृतं मिथ्येति । अनृतादसत्यात् परं प्रधानं पापं दुरितं नास्ति । यदानृतमाचरति स सर्वं पापं कर्त्तुं शक्नोति । असत्याचरणशीलेऽस्यैव पापं क्रमशः सम्भविष्यति । 'अनृतं कृषिः । वितथं त्वनृतं वचः' इत्यमरः । नीतिविषयविशेषेषु सर्वं सत्यानृतमिथुनीभूतम् । तत्र विवेकसम्पन्नेन पुंसा क्षीरनीरयोर्हंस इव सत्यमादाय कार्य्यं सम्पाद्यमिति । विशेषस्तु भारते कर्णपर्वणि—

"विवाहकाले रतिसंप्रयोगे,
प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थे ह्यनृतं वदेच्च,
पञ्चानृतान्याहुरपातकानि" ॥

**न मीमांस्या गुरवः ॥३०॥**

**खलत्वं नोपेयात् ॥३१॥**

---

अतः अनिष्टतो हिताधिकप्राप्तीतिनियमानुसारेण शिक्षाहादि-पञ्चकेषु अन्तरायकरणं न पापजनकमिति ॥ २८ ॥

गुरूणां ज्ञानगुणवयोवृद्धानां वचांसि कार्य्याणि च अमीमांस्यानीत्याह नेति। गुरवः शिक्षकाः ज्ञानधर्म्मोपदेष्टारः आचार्य्या इति यावत्। ते न मीमांस्याः 'पूजितविचार-वचनो मीमांसाशब्दार्थः' इति भामती। विप्रतिपत्तौ सम्य-ग्विचारो मीमांसा। अन्यत्र जैमिन्यादिप्रणीतदर्शने वेदा-दिवाक्यानामविरोधापादानं विचारणा चेति। मीमांसन-योग्याः मीमांस्याः। न तेषु तेषामनुष्ठितकार्य्येषु च। मन्द-मतीनां गुणा दोषाश्च विचार्य्याः। प्राज्ञानां समीक्ष्यकारिणां गुणदोषविचारोऽज्ञैर्नैव कार्य्यः। उक्तञ्चाप्यत् 'आज्ञा गुरूणां ह्यवि-चारणीया' इति। प्राज्ञानां कार्य्ये अशेषदोषप्रदर्शने कार्य्यव्याघा-तोऽशिष्टाचरणमपि वर्त्तते। प्राज्ञाः सूक्ष्मबुद्ध्या कार्य्याणि विधा-स्यन्ति, तैः प्राकृतजनदोषप्रदर्शनमुपेक्षणीयम्। यतः मेघध्वनि-श्रवणात्परं पञ्चाननो गर्जति न हि वहुगोमायुरुतश्रवणात् परमिति ॥ ३० ॥

दुराचरण-शीलत्वस्य निषेधमाह खलत्वमिति। खलत्वं कलह-शीलत्वं दुर्जनत्वमिति यावत्। नोपेयात् लोकैः सार्द्धं वृथा पैशुन्यादिकं नाचरेत्। यस्तु स्वभावतो दुर्जनस्तस्य

## नास्ति खलस्य मित्रम् ॥३२॥

---

प्रतिक्षणं विपदापतति, अपरमपि विडम्बयति। 'पिशुनो दुर्जनः क्रूरः खलो दुःशील इत्यपी'ति व्याडिः। 'खलः कल्के भुवि स्थाने क्रूरे चार्णे जपेऽधमे' इति मेदिनी च। 'कलहं नोपेयात्' इत्यपि पाठान्तरमस्ति। तदात्वे अर्थः सुगमः। कविसमयश्च—

> 'न दुर्जनः सहायः स्याद् भुजङ्ग-मक्रसिर्यतः।
> उपकारश्छलेनैव पश्चाद् दुःखं प्रदास्यति'॥

खल सञ्चये, खलतीत्यतोऽचा सिद्धम्। यद्वा खे छिद्रं लाति यः स खलः। सदा परच्छिद्रानुसन्धानपूर्वकं विपद्दतीति भावः।

खलस्वभावस्य बन्धुत्वाभावमाह नेति। खलस्य दुर्जनस्य मित्रं सखा नास्ति। सर्वैः सार्धं प्रीतिपूर्वव्यवहाराभावात्। तादृशे व्यवहारे सति खलत्वस्यावसराभावः। यतः—

> 'व्यवहारेण जायन्ते मित्राणि रिपवस्तथा'। इति।

सद्व्यवहारे सौहृदं, दुर्व्यवहारे वैरित्वञ्च भवति। उक्तञ्च नीति-निपुणैः—

> 'दुर्जनेन समं सख्यं प्रीतिश्चापि न कारयेत्'।

इति प्रागुक्तमन्यत्।

'नास्तिकलहस्य मित्र'मिति पाठान्तरत्वे कलहस्य तत्प्रियस्य लोकस्येत्यर्थः। अत्र कलहोऽस्यास्तीति अर्शआदित्वादच्।

**लोकयात्रा दरिद्रान् बाधते ॥३३॥**

**अतिशूरो दानशूरः ॥३४॥**

---

'कलह-विग्रहौ' इत्यमरः । 'कलस्तु मधुरध्वनौ' इति धरणिः । कलस्य हननम् । अन्येभ्योऽपि इति वार्त्तिकात् डप्रत्ययः ॥३२॥

निःस्वस्य लोकसमागमः पीडादायकस्तमाह लोकेति । लोकयात्रा लोकानां समागमः । स्वगृहे आत्मीयजनागमः । यद्वा उत्सवः बहुसम्मेलनम् । दरिद्रान् निर्धनान् लोकान् सा बाधते । निरन्तरं धनाभावात् क्लिश्नाति । दरिद्रास्तु समागतलोकानां स्थानदानपानभोजनादिभिः परितोषजनने असमर्था भवन्ति । अतस्ते दुःखिताः क्लिश्नन्ति । 'यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्' इति मेदिनी । धनवन्तस्तु लोकयात्रानृत्योत्सवैरानन्दमधियन्ति । उक्तञ्च वृद्धैः—

> 'लोकयात्रा विवाहश्च उत्सवो बान्धवागमः ।
> गीतं नृत्यं देवसेवा धनिकानान्तु शोभनम्' ॥

या प्रापणे, यानम् । 'हु या मा श्रुभसिभ्यस्त्रन्' इति याते स्त्रन् । स्त्रियामाप् । दरिद्रा दुर्गतो, दरिद्राति । ततः पचाद्यच् ॥३३॥

धनदातुर्वीरश्रेष्ठत्वमाह अतीति । दान-शूरः । शूरो दाने सदुद्देशे स्वधनस्य सम्यगर्पणे । यद्वा धर्मार्थं स्व-स्वत्वध्वंसपूर्वकपरस्वत्वापादानकर्मणि । तत्र शूरो वीरः वदान्यः । अतिशूरोऽधिकश्रेष्ठः, वीरो दैहिकबलात् शौर्य्यमात्रं प्रकटयति । दानशूरश्च

भूषणं गुरु-देव-ब्राह्मणेषु भक्तिः ॥३५॥
सर्व्वस्य भूषणं विनयः ॥३६॥

---

दान-बाहुल्येन बहूनां जीवनरक्षणं धर्म्मादिकार्य्यञ्च सम्पादयति यतो धीरादपि श्रेष्ठः। दानशूरः सततं दीनदुःखापहारको हितकृत्याभिरतश्चेति भावः। 'शूरो वीरश्च विक्रान्तः'। 'शूर वीरविक्रान्तौ' शूरयति। इत्यस्मादचा सिद्धः। प्रागुक्तमन्यत् ॥३४॥

सज्जनस्याभरणमाह भूषणमिति। गुरुराचार्य्यो ग्रामदाता। विद्या-सम्बन्ध-वयोज्येष्ठश्चेति। देवः परमेश्वर इन्द्रादिश्च। ब्राह्मणो विप्रोऽग्रवर्णज्येष्ठ इति यावत्। स चादिवर्णो ब्रह्मगुणजः तपः श्रुतिसम्पन्नः। तत्र 'ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतिः। 'तपः श्रुतिश्च योनिश्च त्रयो ब्राह्मण-कारण'मिति स्मृतिश्च। एषु श्रेष्ठेषु सद्गुणाढ्येषु भक्तिः परानुरक्तिः सेवानुरागश्चेति। 'सा ईश्वरे परानुरक्तिः' इति शाण्डिल्यसूत्रे भक्तेर्लक्षणम्। सा प्रसिद्धा, चित्तस्य निर्विशेष सात्त्विकी वृत्तिः। ईश्वरे भगवति उपास्ये। परानुरक्तिरत्युत्कटोऽनुराग इत्ययं सूत्रार्थः। सज्जनानां भूषणमलङ्कारः। तेन च लोकाः शिष्टाः शिक्षिताः सन्तो विनम्रा भवन्ति। तथैव धन-गुण-वृद्धे नृपे चानुरक्तिः कार्य्येति। 'विप्रश्च ब्राह्मणः' इत्यमरः। ब्रह्मणोऽपत्यम्, तस्यापत्यमित्यण्। अनित्यत्वेन टिलोपो न भवति। यद्वा ब्रह्माधीते 'तदधीते तद् वेद' इत्यनेन च अण् सिद्धः। प्रागुक्तमन्यत् ॥३५॥

लोकानां व्यवहार-निर्वाहाय विशेष-भूषणमाह सर्व्वस्येति।

## आचारवान् विनीतोऽकुलीनोऽपि आर्य्यः॥२७॥

सर्व्वेस्य जनस्येति जात्यैकवचनम्। सर्वेषामिति व्यक्तिभेदेन प्रयोगः साधुः। भूषणमलङ्कारः। विनयो नम्रता सौशील्यमिति। विनय-तुल्यो गुणो दुर्लभः। विनयिनः शत्रुर्विरलः। विनयेनापदो व्युत्तीर्णो भवति तेन च व्यावहारिके विषये सर्वे वशाः स्युरिति। 'विनीतस्तु निभृते निर्जितेन्द्रिये वाणिज्ये साधुवाह्यश्वे विनयग्राहिते त्रिषु' इति हेमः। प्राग् व्याख्यातमन्यत् ॥२६॥

शास्त्रानुसारेण विनयाचार-पालने कुलीनत्वाभावेऽपि आर्य्यत्वमाह एति। अविनीतो विनयरहितः समुद्धतः। अकुलीनोऽनुच्च कुलजातोऽपि जनः यद्याचारवान् संयतोभवेत्तदा आर्य्यः श्रेष्ठः स्यात्। सदाचारविनय-विहीन आर्य्योऽपि अनार्य्य-सदाचरणे समर्थः दुःशीलत्वात्। अत आचारविनययोः कौलिन्ये हेतुत्वमुक्तम्। 'महाकुल-कुलीनार्य्य सभ्य-सज्जन साधवः' इत्यमरः।

'अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते'।

इति नीतिविदः। 'अकुलीनोऽपि विनीतः कुलीनाद्विशिष्टः' इत्येवं पाठान्तरत्वे। विनयाचरण-युक्तो जनोऽकुलीनोऽपि कुलीनात् श्रेष्ठो भवतीत्यर्थः स्यात्। प्रागुक्तमार्य्यलक्षणम्। कुलस्यापत्यम्। 'कुलात् खः'। 'अपूर्वपदादन्यतरस्यां यड्ढकञौ चेति' सिद्धम्। आर्य्य इति। ऋ गतौ, अर्य्यते। 'ऋ हलोर्ण्यत्' इत्यनेनार्य्यपदं सिद्धम् ॥ २७ ॥

**आचारादायुर्वर्द्धते कीर्त्तिश्च ॥ ३८ ॥**

**प्रियमप्यहितं न वक्तव्यम् ॥ ३९ ॥**

---

सदाचरणस्य फलमाह आचारादिति। आयुर्जीवितकालः। कीर्त्तिर्यशो गुणप्रचार इति। द्वावेतौ आचारात् सदाचरणात् मनोतिश वर्द्धेते। 'आचाराल्लभते ह्यायुराचारादीप्सित-प्रजाः' इति धर्मशास्त्रकाराः। तादृशाचरणेन स्वास्थ्यम्, स्वास्थ्यादिन्द्रियनैर्मल्यम्, तस्मादबुद्धेः प्राखर्यं नैरुज्यञ्च, ततो ह्यायुषो वर्द्धनम्। आचारः कुत्रचिद् व्यवहारः। यथा च बृहस्पतिः 'आचारेणावसन्नोऽपीति' प्रागुक्तम्। सदाचरणं त्रिविधम्। हृदयसताचरणम्। कौलिकम्। शास्त्रीयञ्चेति। आयुः। इण गतौ, एति। 'एतेर्णिच्च' इत्यौणादिकसूत्रादुणिः। 'कीर्त्तिः प्रसादयशसोर्विस्तारे कर्द्दमेऽपि च' इति व्याडिः। कृत संशब्दने, कीर्त्यते। 'ऊति यूति' इत्यादिना कीर्त्तिपदं निपातितम्। ३८॥

लोकानामुद्वेगकरत्वादहित प्रियकथने यत्नौचित्यमाह प्रियमिति। प्रियं प्रतिपन्नकं हृद्यमनुकूलमिति यावत्। तद्यदि अहितमनिष्टकरं स्यात्तदा न वक्तव्यम्। तदुक्तं मानवे 'न ब्रूयात् सत्यमप्रिय'मिति। 'प्रियञ्च नानृतं ब्रूयादि'ति च तत्रैव। यत्र तु समाजानिष्टं महदापतति तत्र तावुभौ वक्तव्यौ इति केवलनीतिविदः। यतोऽस्यनाशाय बहुदानं नोचितम्। तत्र विषये गुरुत्वलघुत्वे चिन्तनीये। 'प्रियौ हृष्टोमभे हृद्येऽनुकूले धवे'

## भूत्यनुवर्त्तनं पुरुषस्य रसायनम् ॥४४॥

---

निर्व्वंशतोऽपि सतस्तु । अशेषः परिशेषरहितकरणं युक्तम् । यत एते शेषतो विद्यमाना अपि परं परिवर्द्धन्ते । अग्निस्फुलिङ्गस्य महानलवत् । शेषविनाशो दाहो चानिर्देहनाशश्चावश्यम्भविष्यतीति । एतच्छेषां समुच्छेदेन निःशेषत्व कार्य्यः । तथा च महर्षिः—

> 'ऋणशेषोऽग्निशेषश्च ।धिशेषस्तथैव च ।
> मनुशेषः पापशेषो निःशेषमपि शेषयेत्' ॥

'ऋणाग्निव्याधितेष्वशेषः कर्त्तव्यः' इति सूत्रपाठे चार्थासारल्यं नास्ति । ऋ गतौ, अर्य्यते । इत्यतस्तः । 'ऋणमाधमर्ण्यं' इत्यनेन नत्वम् । प्राग् निरुक्ता धन्न्यादिशब्दाः ॥ ४३ ॥

ऐश्वर्य्यानुवर्त्तने पुंसो हितमाह भूतीति । भूतिः विपुलधन ऐश्वर्य्यस्य च । अनुवर्त्तनमनुधावनमिति । पुरुषस्य मानवस्य । रसायनम् । अतिशय सुखजनकत्वेन जराव्याधिविनाशकम् । रसस्य नवनवीत्यायनं देहपुष्टिकरं येनोपायेन तत् । तदुक्तं मैदनी—

> 'यज्जरा-व्याधि-विध्वंसि, भेषजं तद्रसायनम्' ।

तन्त्रे चान्यत्र—

> 'यज्जराव्याधिविध्वंसि वयसस्तम्भकं तथा ।
> चक्षुष्यं बृंहणं वृष्यं भेषजन्तद्रसायनम्'

## नार्थिषु अवज्ञा कार्या ॥४५॥

रसायनफलं यथा तत्रैव—

'दीर्घमायुः स्मृतिर्मेधामारोग्यं तरुणं वयः ।
देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात्' ।

ऐश्वर्येण पार्थिवत्वं निश्चितमेव । 'विभूतिर्भूतिरैश्वर्य'मित्यमरः । यथा रसायनेन पुरुषस्य बृंहणादि भवति तद्वद् विपुलधनेनापि लोको गर्वितो मत्तः सुखी च भवति । वैद्यके भावप्रकाशादौ रसायनफलं सम्यगस्ति ॥ ४४ ॥

धनादि-प्रार्थनाकारिणो जनान् प्रति हेयकरणनिषेधमाह नेति । अर्थिषु याचकेषु प्रार्थनाकारिषु इति । तादृश जनेषु अवज्ञा अवमाननं हेयज्ञानञ्च न कार्यम् । वरं तेषां यथाशक्ति धनादिना साहाय्यमेव सम्यग् विधेयम् । कथितमथवा—

'धनदानेन दीनानां दुःखहर्त्ता जनोत्तमः ।
येनैव क्रियते लोके स सुधीः स च स्वर्गभाक्' ।

तथा च—'याचकं नावजानाति प्रीतिं करोति सर्वदा ।
ददाति किञ्चित् स्नेहेन स धनी पुरुषोत्तमः' ॥

यदा च धनादेरभावस्तदा मधुरवाचा विनयादिना च याचकास्तोषणीया इति नियमः साधुः । स्वाभाविकनियम एव यद्विद्यमानाद्धनादिभिरुपकारसाधनमिति । अवज्ञानमवज्ञा, अवपूर्वाज्जानाते 'आतश्चोपसर्गे' इत्यङ् । 'वनीयको याचनको मार्गणो याचकार्थिनौ' इत्यमरः । अर्थोऽस्यास्तीति 'अर्थाच्चासन्निहिते'

सुदुष्करं कर्म्म कारयित्वा कर्त्तारं नावमन्येत ॥ ४६ ॥

न कृतघ्नस्य नरकान्निवर्त्तनम् ॥ ४७ ॥

---

इति वार्त्तिकादिनि.। यद्वा अर्थ याचने, अर्थयते। ग्रह्यादित्वात् णिनि ॥ ४५ ॥

दुष्करकर्म्मानुष्ठानात् परं तत्कर्त्तुरवमाननं नोचितमित्याह सुदुष्करमिति। सुदुष्करमतिकठिनं दुःसाध्यमिति। यत् कर्म्म तत्कारयित्वा सम्पादयित्वाऽभिनिष्पाद्य च। प्रेक्षावत्कृते कार्य्ये तत्कर्त्तारं कार्य्यानुष्ठातारं नावमन्येत। तं नावजानीयात्। 'दुष्करं कर्म्म कारयित्वा कर्त्तारमवमन्यते नीच' इत्येवं पाठान्तरत्वे नीचोऽधम. दुष्करं कर्म्मकारयित्वा तत्कर्त्तारं अवजानातीत्यर्थ.। यदि कर्म्मकर्त्तृदोषो वर्त्तते तदा तस्य गर्हणं युक्तमिति। कर्म्मणो दुष्करत्वे तत्फलस्यालाभे तत् कर्त्तुर्न दोष इति प्राज्ञानामभिमतम्। अज्ञानान्तु तद्विपरीतम्। कारणगतदोषात् कार्य्यहानिरिति समाधि.। असम्पन्ने कर्म्मणि निष्पन्ने वा तत्कर्म्म पुनरनुष्ठेयम् ॥ ४६ ॥

कृतघ्नस्य तत्कार्य्य फलं नरकमात्र नेति। कृतघ्नस्याकृतज्ञस्य। कृतमुपकारं हन्तीति तस्य। नरकान्निरयात् परमदुर्गतेः। निवर्त्तनं नापि तस्मादव्याहतिः परन्त्वत्रैव पापाधिक्याच्चिरनिवास.। तदुक्तं विष्णुना—

## जिह्वायत्तौ वृद्धि-विनाशौ ॥ ४८ ॥

'ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः' ॥
इति पूर्व्वमुक्तं मन्वादिभिः सर्व्वैः ।

कृतघ्नस्तूपकारमनुभूयापि प्रत्युपकारमकृत्वा तत्कर्तुरनिष्टा-चरणं कुर्वन्नधिकः पापिष्ठः । 'नरकः पुंसि निरयो देवारातिप्रभेदयोः' इति मेदिनी । नॄ नये, नरति दुर्गतिं वा । 'कृञा-दिभ्यः संज्ञायां वुन्' इत्यौणादिकात् । यद्वा नराः कायन्त्यत्रेति 'मूलविभुजादित्वा'दिति प्राप्ति'कात् को न भवति, 'कर्त्तरि कृत्' इति बाधनादधिकरणे गत्यर्थाकर्मक विषयाभावे ॥ ४७ ॥

कार्यस्याभ्युदयस्य विनाशस्य रसनाधीनत्वमाह जिह्वेति । जिह्वाया रसनेन्द्रियस्यायत्तौ अनुगतौ । वृद्धिर्वर्द्धनमाधिक्यम् । विनाशः समुच्छेदोऽभावो वा । कार्यस्य एतौ द्वौ जिह्वाधीनौ स्याताम् । दुर्वचसा अपकारे कार्यहानिर्मधुरवचसा तु कार्यमीमांस्यै इत्यतो व्यवहारकाले सुचिन्त्यैव संयतवाग्भवेत् । तदुक्तं ऋषिभिः—'न दोषा भवन्ति मधुरवचसा केनचिदपि' । अपरञ्च—'वाग्माधुर्यात् सर्व्वलोकप्रियत्वम्' । यथाऽभिरामस्य । 'वाक्पारुष्यात् सर्व्वलोकाप्रियत्वम्' । यथा दुर्वचनस्य । 'रसज्ञा रसना जिह्वा' इत्यमरः । भोगाधिक्यात् सम्पदो विनाशस्ताभ्याः संयमे धनादेर्वृद्धिर्भवतीति । अत्र जिह्वेत्युपलक्षणमन्येषामिन्द्रियाणामपि संयत्य वाग्व्यये वृद्धिहानी च चिन्तनीये । जिह्वेति ।

**विषामृतयोराकरो जिह्वा ॥४९॥**

**प्रियवादिनो न शत्रुः ॥५०॥**

---

लिह आस्वादने, लेढि। लिहन्ति अनया वा 'शेवयह्व जिह्वा' इत्यौणादिकसूत्रात् तत्पदं साधु। केचित्तु लिहेः 'पूर्वं जिह्वा चीवा' इति वन्प्रत्ययस्तेन सिद्धम्, पृषोदरादित्वाडेत्वाद्युः ॥४८॥

प्रागुक्तविषयस्य स्फुटीकरणमाह विषेति। विषं क्ष्वेडश्च गरलश्चेति। अमृतं सुधा मृतिरोधकम्। एतयोर्द्वयो जिह्वा रसना आकरः क्षेत्रं प्रसवभूमिः। जिह्वासाहाय्येन वागिन्द्रियं सद्वक्ति तेन सुधोपमः व्यवहारः, सर्व्वत्र कार्य्यं सौख्यञ्च। दुर्व्वाक्यं वक्ति चेत्तेन विषवन्महद्वामं स्यात्। जिह्वा हि परमेशनाम जपादिमन्त्रसाधनेन निर्वाणमपि प्रापयति। यद्वा असदुक्त्या वाग्वज्रप्रहारैव विषमुद्गिरति, जनं दुःखयति स्वात्मानमपि पीडयति च। तेन हि लोकाः शत्रवो भवन्ति। क्षिप्तमित-सत्यवचाभिर्भिधनादपि समुत्सार्य्यं भवति। विषू व्याप्तौ, विष प्रवेशने वा। उभयोः क्विपा सिद्धम्। अमृतमविद्यमानं मृतं मरणमत। मृङ् प्राणत्यागे, इत्यस्माद् भावे क्तः। 'आकरो निकरे श्रेष्ठौ' इति कोषः। तत्र करणे, आकुर्व्वन्त्यत्र, कॄ विक्षेपे, आकीर्य्यन्ते वस्तून्यत्रेति वा 'पुंसि संज्ञायाम्' इति घप्रत्ययः ॥ ४९ ॥

हितवादिनो जनस्यारात्यभावमाह प्रियेति। प्रियवादिनः। प्रियमनुकूलं मधुरमिति यावत्। तद्वक्तुं शीलमस्येति। प्रिय-

स्तुता देवा अपि चिरन्तुष्यन्ति ॥५१॥

अनृतादपि दुर्वचनान्निवृत्तिः ॥५२॥

---

प्रिय-कथन-शीलस्य जगति कोऽपि शत्रुस्तस्मिन्न भवतीत्यर्थः। उक्तञ्च कविभिः 'हितं मनोहारि च दुर्लभं वचः'। अन्यच्च—

'मधुरोक्त्या हितोक्त्या च प्रियो भवति सर्वतः।
पारुष्यवचनात्सुहृन्नाशो भवति निश्चितम्' ॥

अपरञ्च—

'हितवाक्यप्रयोक्तारो दातुः परोपकारिणः।
साधोर्मानस्य जगति रिपुर्नैव प्रदृश्यते' ॥

प्रीञ् तर्पणे, प्रीणाति। 'इगुपध' इत्यादिना कः। 'प्रियो हृद्ये प्रये धवे' इति हैमः। प्राङ्निरुक्तमन्यत् ॥ ५० ॥

प्रियाचरणेन देवानामपि परितोषमाह स्तुता इति। स्तवेन आरोपितगुणादि कथनेन परिस्तुताः। गौरविताः। देवा अमरा इन्द्रादयः। अपि निश्चितं, चिरमनियतम्। तुष्यन्ति सन्तुष्टाः प्रसन्ना भवन्ति किंपुनर्मानवाः? देवा अपि सुप्रसन्नाः स्युः। अतः स्तुतिवाक्येन प्रशंसया वा सर्वे सन्तोष्याः जगति न कोऽपि गुणान् हित्वा स्वदोषं स्वापमानवचनञ्च श्रोतुमिच्छति अप्रीतिकरत्वादुद्वेगकरत्वाच्च। ये पराराधन-निपुणाः प्रियभाषिणस्ते अनायासेन कृतार्थाः स्युः। ष्टुञ् स्तुतौ, स्तवीति स्तौति च। ततो कर्मणि क्तप्रत्ययः ॥ ५१ ॥

असत्याद् दुर्वाक्यस्य दोषकारित्वाधिक्यमाह अनृतादिति।

## राजद्विष्टं नच वक्तव्यम् ॥५३॥

---

अनृतान्मिथ्यावाक्यात्। दुर्वचः दुष्टवाक्यं कुत्सितवाक्। यद्वा हृदय सन्तापकारि-परावज्ञाकारिवचः। चिरं सुदीर्घकालं तिष्ठति। असत्यं सत्यवचसा तिरोधत्ते। दुर्व्वचस्तु क्षोभप्रद-त्वेनाचिरत कालं स्थायोति। अतो दुर्वचनं सदा परिहर्त्तव्यम्। अस्मिन् विषये प्रागुक्तमन्वयत्। 'अनृतमपि दुर्वचनं चिरन्तिष्ठति' इत्थं पाठभेदे सुगमार्थमिदं सूत्रम्। अनृतं मिथ्या, यद् दुर्वच-नम्, तत् दीर्घकालं तिष्ठत्येव ॥ ५२ ।

नृपविरुद्धभाषणे स्वानिष्टं राजावज्ञा-प्रकटनश्चभवति तन्निषेध-माह राजेति। राज्ञां नृपाणां भूभृतामिति। द्विष्टं द्वेषान्वित-मप्रियसूचकमिति यावत्। तत्कदापि न च वक्तव्यम्। यतः तेषां क्रोधो महानिष्टकरः तादृशेन वाक्येन समुत्पद्यते। बहु-धायाणं दण्डादिना हानं स्यात्। अत्र राजेत्युपलक्षणम्। तेन देव-गुरु-साधु-सोमयाजी महाजनानां द्विष्टमपि वचः परिहार्य्यम्। 'राजद्विष्ट न वक्तव्य'मिति पाठान्तरं दृश्यते। तेन नार्थमार्थक्यम्। 'अत्र चकारोपादानेन सर्वथा निषेधः सूचितः। राजानुष्ठित-कार्य्यस्य विरुद्ध समालोचनं तद्गाविकार्य्ये आरोपो विधानलङ्घन-मपि तेन प्रतिसिद्धं प्रजानां हानिकारत्वादिति। तथा च प्राहुः 'राजानमात्मानमिवान्यत् पालयेत्' इत्याहुः। द्विष् अप्रीतौ, द्वेष्टि। इतः क्तप्रत्ययः ॥ ५३ ॥

श्रुतिसुखाः कोकिलालापाः ॥५४॥
तप्यते दुष्करकारो बलवान् नाम ॥५५॥

---

पिकस्य श्रवणस्य श्रोत्रेन्द्रियप्रीतिकरत्वमाह श्रुतीति। श्रुतिः श्रवणं तदिन्द्रियमिति। तस्य सुखाः प्रीतिजनकाः। कोकिलानां वनप्रियाणां ये आलापाः कूजनाः मधुरस्वरास्ते पक्षिणां सन्तोऽपि जाताः श्रवणाभिरामाः चित्तविनोदकाश्च भवन्ति। किमुत मानवमधुर-वाक्यानां वाक्यवचसां वा मनो-भिरामता। 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः। कुक आदाने, कोकते। 'सन्निकृष्यन्ति' इति क्वचित्। 'श्रुति-सुखात् कोकिलालापात्तुष्यन्ति' इति पाठान्तरे श्रुतिसुखकर-पिकालापश्रवणात् लोकाः परितुष्टा भवन्ति। सुखं नाम सर्वथा अनुद्वेगकरमनोवृत्तिमात्रम्। 'श्रुतिः स्त्रीवेदे च तत्कर्म-प्राम्नायवार्त्तयोः स्त्रियाम्' इति कोषः। श्रु श्रवणे, श्रूयते अनयेति करणे क्तिन्। ५४।

असाधु-कर्मानुष्ठातुः पश्चात् सन्तापानुभवमाह तप्यत इति। दुष्करकारो दुराचारो क्रूरकर्मा कठोरस्वभाव इति। बलवान् अतिशयुद्योगसम्पन्नः निपुणोऽपि तप्यते परिक्लिश्यति। स्वीया-नुष्ठितगर्हितकर्मफलेन स्वयमेवानुतप्तो भवति। यादृक् कर्म तत्फलन्तु तादृगेव स्यादिति नियमात्। यथा शैशवेऽनधीत-विद्यस्य तारुण्ये अनुतापः, साधुकारी तु सर्वं सुखी परहित-

**स्वधर्म्महेतुः सत्पुरुषः ॥ ५६॥**

**नास्ति अर्थिनो गौरवम् ॥५७॥**

---

कारो च। 'दुष्करं कठिने कार्य्ये गर्हिते पापकर्म्मणि' इति कोषकारः। दुष्करं कर्म्म शीलमस्येति तच्छीले करोतेर्णिन्। 'यत्नवांश्च सुसंयोगी कार्य्ये जागरुकः सदा' इति च। पदनित्यत्यादि प्रागुक्तम् ॥५५॥

स्वधर्म्मार्ज्जनात् पुंसां श्रेष्ठत्वमाह स्वेति। स्वस्यात्मनो यो धर्म्मस्तस्याचरणहेतोः। तदाचरणशीलः सदुत्तमः श्रेष्ठो मानवः स्यात्। यद्वा यो विद्याचारित्र-ज्ञानादिना स्वधर्म्मस्य हेतुः कारणं भवति स एव जगति सदुत्तमः पुरुषो भवेदिति। सत्पुरुषः स्वधर्म्ममनुष्ठाय परेषामपि धर्म्माचरणोपदेशे धार्म्मिकत्वेन हेतुर्भवतीति सारः। तदुक्तं धर्म्मशास्त्रे—

'वरं स्वधर्म्मो विगुणो न पारक्यं स्वनुष्ठितम्'।

तदेवान्यत्र—

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति गीतायाम्। परस्यान्यस्य धर्मः परधर्मः। अन्यदीयत्वेन प्रकृतिविपरीतकूलत्वाद् भयावहः। यद्वा परः श्रेष्ठो धर्मः तस्यानुष्ठाने हे गप्रदत्वाद् भीतिजनकः। 'स्वधर्मं हेतुभूतः सत्पुरुषविशेषः' इत्थं पाठभेदे सूत्रार्थस्तु सुगमः। सत्पुरुषविशेषः एव स्वधर्महेतुभूता न सर्वे जनाः। प्राङ्निगदितमन्यत् ॥५६॥

याचकस्य श्रेष्ठत्वाभावमाह नेति। अर्थिनो याचकस्य

## स्त्रीणां भूषणं सौभाग्यम् ॥५८॥

---

प्रार्थिनः । यद्वा धनवतो वादिनश्च । गौरवस्य प्राधान्यस्य माननीयत्वस्याभावः स्यात् । यतः प्रार्थिनः स्वदैन्यप्रकाशेन गौरवम् ह्रसति । धनवतश्च तद्व्याकार्य्ये सततं चलशीलत्वाद्दानाभावे कृपणत्वेन निन्दा प्रसरति । वादिनश्च विवादे जयाशया गौरवं हित्वा स्वकार्य्यसाधनाय च लघुत्वमपि श्रेयः स्यात् । एतच्च हानिं चान्यस्य प्राप्तिमव्ययभाविनीति । 'प्रार्थने मानहानिरेवेति' लघुचाणक्ये । 'दाने कस्यास्ति गौरवम्' इत्यन्यत्र । अपरञ्च—

'कार्य्यसाधन-व्ययस्य लघुत्वं कुत्रचिद् भवेत्' ।

सूत्रमिदं क्वचिदादर्शग्रन्थे नोपलभ्यतेऽन्यत्र विद्यते । मयैव च—

'स्वकार्य्यमुद्धरेत् प्राज्ञः कार्य्यध्वंसे च मूर्खता' ।

इति नीतिरेषा मनोरमा । गुरोर्भावो गौरवम् । श्रेष्ठत्वमित्यर्थः ॥ ५७ ॥

नारीणां विशेषभूषणमाह स्त्रीणामिति । स्त्रीणां महिलानां वरवर्णिनीनामिति । भूषणमलङ्कारः सुषमाकरः । सौभाग्यं प्रभावस्वलक्षणं पति-पुत्रवत्त्वम्, पातिव्रत्यञ्च । 'लज्जैव भूषणं स्त्रीणा'मिति केचित् । 'क्षमा लज्जा च योषिति' इत्यपरे ।

'सौभाग्यलक्षणं स्त्रीणां पातिव्रत्यं प्रकीर्त्तितम्' इत्यन्ये । 'असौभाग्यं ज्वरः स्त्रीणाम्' इति लघुचाणक्ये च । पतिपत्न्योर्विवाहमाङ्गलिकसंस्कारेण ऐकात्म्यात् पतिभक्त्वं परं सौभाग्यसूचकम् । तथा च श्रुतिः 'मम व्रते ते हृदयं दधाति' ।

## शत्रोरपि न पतनीया वृत्तिः ॥५८॥

---

'ध्रुवा द्यौः, ध्रुवा पृथिवी, ध्रुवं विश्वमिदं जगत् ।
ध्रुवास पर्वता इमे ध्रुवा स्त्री पतिकुले इयम्' ॥ इत्यादि च ।
'सौभाग्य कर्तुराचारता' इति पाठभेदे कर्त्तुं पत्युश्च य आचार-स्तादृश एवाचार नार्य्या कार्यं । नतु स्वेच्छाचार । आचार-शीलता पत्यु परिचर्या वा । अपरे तु तासां 'देवसेवा विनय क्षमा पातिव्रत्येन सहैते सौभाग्यगुणा' इत्याहु । अपरास्तु 'शिल्प धैर्यं गृहकर्मदाक्ष्यं विद्या विनय'चेति प्राहु । सुभगस्य भाव सौभाग्यम् । सुभगशब्दात् घञ् ॥ ५८ ।

अरातेरपि वृत्तिसमुच्छेदे निषेधमाह शत्रोरिति । शत्रोररा-तेरपि निश्चितम् । वृत्तिर्जीविका । यया वृत्त्या, भोजनाच्छा-दनावस्थिति निर्वाह स्यात् सा । न पतनीया नापि समुच्छेद्या । अपि तु विदुषा सा रक्षणीया । अत्र पतनीयेति पातनीयेत्य-भवति एतत्स्वविषये । उक्तञ्च 'वृत्तिच्छेदेन तद्वध' इति । अत्र वृत्तिच्छेदो जीविकाहानिकरणम् । 'शत्रुभिरनभिपतनीया प्रवृत्ति' इति भिन्नपाठोऽप्यस्ति । मनस्विन पुंस प्रवृत्ति । शत्रुभिरनभिपतनीया यतो सम्यक् आक्रमणशून्या भवतीत्यर्थ । तेन स्वमनोपेन शत्रोराक्रमण प्रतिबध्य सर्वत्र स्वसामर्थ्यं प्रक-टयति । 'वृत्तिर्विवरणे जोव्ये कैशिक्यादिषु चेष्यते' इति विश्व ॥ ५८ ॥

**अप्रयत्नोदकं क्षेत्रम् ॥६०॥**

**एरण्डमवलम्ब्य कुञ्जरं न कोपयेत् ॥६१॥**

---

क्षेत्रनिरूपणमाह अप्रयत्नेति। क्षेत्रं शस्यादीनां प्रसवभूमिः। अप्रयत्नोदकम्, अप्रयत्नेनानायासेन सुलभतोयोदकं जलं यत्र तत् क्षेत्रं प्रशस्तमित्यर्थः। नियामादेरपि तद्योग्यम्। अन्य-निर्जलं मरुस्थानम्, शस्योत्पादननिवासादेरयोग्यम्। अनूपाख्यं सागरसन्निहितं निःसिक्तं समुर्व्वरं क्षेत्रं कृषि-वासादेर्योग्यं स्वास्थ्यकरञ्चेति। 'अप्रयत्नादेकं क्षेत्र'मिति पाठान्तरम्। तेन प्रयत्नाभावात् कर्षणकेदारबन्धन-सलिल-सेकादिरहितं क्षेत्रमेवं कार्य्योपयोगि भवतीत्यर्थो न पृथक्। 'कबन्धमुदकं पाथः' इत्य-मरः। उदकम्। उन्दी क्लेदने उनत्ति। 'उदक'मित्युणादि-सूत्रेण साधुः। न तु उन्दतीति क्षीरस्वामिमते, उन्देरौणादिक-त्वात्। 'क्षेत्रं शरीरे केदारे सिद्धस्थान-कलत्रयोः' इति विश्वः। क्षि निवासगत्योः, क्षीयते धान्यादिभिरनेनेति। ततः क्षिधातोः ष्ट्रन् ॥६०॥

अयोग्यमनुपायेन बृहत्कार्य्यसाधननिषेधमाह एरण्डेति। एरण्डमुरुबकफलम् सारशून्यमदृढम्। तद्दण्डत्वेनावलम्ब्याश्रि-त्येति। कुञ्जरमैरावतं महाकायवारणम्। न कोपयेत् न सं-रोषयेत्। तेन तस्य ताडन-निष्कृति-निग्रहसम्भावनाः सर्व्वतो विरताः एव। परन्तेन तस्य जनस्य महानिष्टं स्यात्। प्रकृते तु

## अतिप्रवृद्धा शाल्मलिर्न वारणस्तम्भः ॥६२॥

---

बलवता शस्त्रपाणिना नृपेण सह निरस्त्रो दुर्बलो नैव विगृह्णीया-द्विवदेच्च । तादृशविग्रहे स्वात्मनाशसम्भवः । यदा यादृक् कार्य्यं कुर्य्यात् प्राक् सामग्री-समवधानमपि तादृगेव कर्त्तव्यम् । ननु लघूपायेन गुरुकार्य्यसाधनम् । यथा नखनिकृन्तनेन सारवद्दृढ-तरुच्छेदनं युक्तम् । तत्र हि करपत्र-कुठारयोः साधकतम-त्वात् । 'एरण्ड उरुबूकः' इति बोपालितः । तथैवामरोऽपि । ईर गतौ कम्पने च, आ ईरयति वायुम् । एरण्डतैलस्य वायुनाश-कत्वा देवं मूलत्वचोऽपि । अस्मादिजन्तादावौर्णादिकादण्ड च् । द्विविधोऽयमेरण्डः । रक्तः श्वेतश्चेति । निघण्टौ वैद्यकेऽस्य गुणा-दिकं रोगहारित्वञ्च वर्णितमस्ति ॥ ६१ ॥

अथासमर्थस्य सुकठिनकार्य्यसाधनेऽयोग्यत्वमाह अतीति । अतिशयेन प्रवृद्धा पुरातना, प्रकाण्डा विशाला शाल्मलिः स्थिरायु-र्हंसः । वारणस्य कुञ्जरस्य स्तम्भो बन्धनस्थूणा न भवति । प्राचीन-प्रकाण्डोऽपि शाल्मलितरुः असारत्वादकाठिन्याच्च वारण-बन्धनायालमिति । यतो यत् यदसाधकं तदतिस्थूलत्वेनापि योग्यं न भवति । नहि मेदोगदेन पीवरकायः पुमान् नीरोग-बलवत् लघुकायेन योद्धुं तं निवारयितुं वा शक्नोति तादृश-सामर्थ्याभावात् । शाल्मलितरोश्चिरदत्वं यथा 'षष्टिवर्षसहस्राणि वने तिष्ठति शाल्मलिः' इति वचनात् । 'पूरणी शाल्मलिद्रुमे' इति कोषः । 'स्थिरायुः शाल्मलिर्द्वयोः' इत्यमरोऽपि । अत्र

अतिदीर्घोऽपि कर्णिकारो न मुसली ॥६३॥

अतिदीप्तोऽपि खद्योतो न पावकः ॥६४॥

---

शमने, शामयतीति निशम्लस्ततः क्विप्। मल धारणे, मलते। 'सार्वधातुभ्य इन्' इतीन्। शाम् चासौ मलिश्चेति कर्मधारयात्तत्सिद्धम् ॥ ६२ ॥

पूर्वपद्यवृत्तात्पर्यस्य विगदीयारम्भसूचकमिदं पद्यम्। उदाहरणान्तरमाह अतीति। कर्णिकारः परिव्याधस्तदाख्यो द्रुमः। यद्वा तत्फलम्। सोऽतिदीर्घोऽपि द्राघीयानपि न मूसली नापि तालमूलिका भवति यतः स्वाभाव्यात्।

'मुसलं स्यादयोऽग्रे च पुं नपुंसकयोः स्त्रियाम्।

तालमूल्यामाखुपर्ण्यां गृहगोधिकयोरपि' ॥ इति मेदिनी।

अन्यत्र 'मुसली गृहगोधिका जपेठी'। 'कर्णिकारः द्रुमान्तरे व्यधे द्रौ च द्रुमोत्पले' इति मेदिनी। अथवा अतिदीर्घोऽपि कर्णिकारः न मूसली मूसलधारीव भवति। दीर्घः। दॄ विदारणे, दृणाति। बाहुलकाद्घक्। कर्णिकामियर्तीति कर्मण्यण्। मुस खण्डने, मुस्यति। 'वृषादिभ्यश्चे'त्यौणादिकत्वात् कलच्। स्त्रीविषयत्वेन, गौरादित्वाद् ङीप्, क्वचिद्धाकृत्वा मादृशोऽपि यत्नेनैव सम्यगर्थो भवतीति। 'न दीर्घोऽपि कर्णिकारः मूसलो भवति' इति पाठभेदे दीर्घोऽपि कर्णिकारः वृन्तफलस्याकारसादृश्यात् न मूसलो भवतीत्यर्थः। सुगममन्यत् ॥ ६३ ॥

पूर्वोक्तविषय-समर्थनेन दार्ढ्योदाहरणान्तरमाह अतीति।

न प्रवृद्धत्वं गुणहेतुः ॥६५॥

---

अति दीप्तोऽतिशयेन प्रज्वलितः । खद्योतोज्योतिरिङ्गणः । अपि प्रकाशवत्त्वात् पावकः । नाग्न्यतो भवति शक्तिवैषम्यात् । यथा कुण्डुभोऽहित्वाविशेषेऽपि न जाति-सर्पः । एवं मन्दार-महीरुहस्य तरुत्वेऽपि न स सारवत् शालकाष्ठायते । दीप्तः । दीप दीप्तौ, दीप्यते । ततः क्तप्रत्ययः । खे आकाशे द्योतते । खं द्योतयतीति क्रमेणाचा पृषो वा सिद्धम् । 'पावकोऽग्नौ सदाचारे वह्निमन्थे चे'ति कोशतत् । पुञ् पवने, पुनाति । ण्वुलप्रत्ययेन सिद्धः । 'अतिज्वलितोऽपि खद्योतो न पावके नियुज्यते' इति पाठान्तरत्वे नार्थे वैषम्यम् । सुगमार्थमिदं सूत्रम् ॥ ६४ ॥

प्रवृत्तस्य गुणहेतुत्वेनिषेधमाह नेति । प्रवृद्धं प्रकाशरूपेण वार्द्धक्यम् । अतिमात्यत्वं प्राशल्यञ्चेति यावत् । न गुणहेतुः । गुणानां चारुत्वौदार्य धैर्यादीनाम् । हेतुः कारणं न भवतीत्यर्थः । परं पाण्डित्येन सत्वज्ञानेन च युवापि प्रवृद्धत्वं याति । तदुक्तं पालिग्रन्थे—

'न तेन थेरोहोति येनऽस्सपलितं सिरो ।
परिपक्को वयो तस्स मोघजिण्णोति वुच्चति' ॥

मानवे एतस्यानुरूप श्लोकोयोऽस्ति प्रागुक्त एव सः पुनरुक्तिभिया-नालोच्यते । अन्यत्र—

**सुजीर्णोऽपि पिचुमर्दो न शर्करायते ॥६६॥**

**यथा बीजं तथा निष्पत्तिः ॥६७॥**

---

'वित्तं बन्धुः वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि'—

इत्येतत् पूर्व्यसूत्रेऽपि प्रसङ्गादुच्यते । तेन च हीनस्य शठादेः गुणमाधुर्यं सर्वथा न लभ्यमिति । यद्वा प्रकटतत्त्वं नापि गुणयत्त्वं पाण्डित्यञ्च महत्त्वे हेतुः । पदनिरुक्तिः प्रागुक्ता ॥६५॥

अमुष्यभावस्य जीर्णत्वेऽपि नान्यथाभावमाह पिचुरिति । पिचुमर्दः निम्बतरुः स्वाभाविक-तिक्तः । सुजीर्णोऽपि न शर्करायते नापि स्वतो मधुरगुणयुक्ता सिता भवति । ततश्च स्वभावतिक्तो निम्बो वार्धक्ये यथा न माधुर्यं याति तथा द्रव्यान्तरस्यापि ज्ञेयम् । 'पिचुमन्दो न शङ्कुनायते' इत्यत्र सूत्रपाठभेदे तदर्थो न प्रीत्यर्थकः स्यात् । तस्य प्राचीनत्वे शङ्कुत्वं स्युपात्तं यास्यत्येव । नापि शर्करात्वं तिक्तत्वाभावात् । 'पिचुमर्दश्च निम्बे' इत्यमरः । पिचून् कुष्ठान् मर्दयतीति पिचुमर्दः । मृद क्षोदे, णिच् । ततः, कर्मण्यण् । पिचून् मन्दयतीति क्षीरस्वामिमतः पाठः । शर्करा, शॄ हिंसायाम् । 'शॄः करन्' इत्यौणादिकसूत्रात् सिद्धम् ॥ ६६ ॥

बीजानुसारेण तत्फलनिष्पत्तिमाह यथेति । यथा यस्य यादृशं बीजं हेतुः कारणशक्तिः । तस्य तादृशी फलनिष्पत्तिः

## यथाश्रुतं तथा बुद्धि: ॥६८॥

---

फलोत्पत्तिः फलविपाको वा। यथाम्रबीजे समुप्ते नापि कोविदारस्योत्पत्तिः। व्यभिचरति च कादाचित्, यथा दावाग्निदग्धस्य वेत्रबीजस्य कदलीकाण्डोत्पादने शक्तिः। यद्वा गोमयाद् वृश्चिकादेरुत्पत्तिः। अत्र तत् कारणवैचित्र्यात् कार्य्यवैचित्र्यम्। भामतीपथ्ये ऽत्येवम्। कारणवैचित्र्यात् कार्य्यवैचित्र्यमिति न सर्व्वत्र व्यभिचारस्तस्य कादाचित्कत्वात्। बीजस्य यथार्थ्यं कार्य्यमप्यविकलं भवेत्। बीजस्याव्याहतत्वं सर्व्वदा स्वयमीयम्। यथा शस्याद्युत्पत्तौ तथा प्रजोत्पत्तावपि ज्ञेयम्। 'हेतुर्ना कारणं बीजम्' इत्यमरः। विशेषेण ईजते। ईज गति कुत्सनयोरित्यस्मादच्। अत्र बर्गीयान्त्यवकारयोरभेदः। निरुपसर्गात् पदधातोर्भावे क्तिन् ॥ ६७ ॥

शब्दश्रवणानुसारेण च तद्विषये बुद्धिरपि तथैवोत्पद्यते इत्यत आह यथेति। यथा श्रुतं यथा श्रवणजनितं शास्त्रार्थज्ञानं भवति। तथैव। ज्ञातविषयानुसारेण बुद्धिर्मतिः स्यादिति। अतो यादृशवस्तुदर्शन-श्रवण-स्पर्शनादिकं भवति तादृशं ज्ञानमस्तति चाधके भवति। सुतोत्पत्तिवाक्यश्रवणेन मनसि हर्षः, शत्रोर्वाक्यश्रवणेन विषादो जायते। अतो हितं प्रियञ्च वाक्यं वक्तव्यम्। तथैव श्रोतव्यञ्चेति। नाहितं न परुषं नापि मृषा वाक्यं वदेत्। 'श्रुतं शास्त्रावधृतयोः' इत्यमरः। श्रु श्रवणे, शृणोति। ततः क्तः। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा' इत्यमरः ॥ ६८ ।

### यथाकुलं तथाचारः ॥६८॥
### सुसंस्कृतोऽपि पिचुमर्दो न सहकारः ॥७०॥

---

कुलप्रथा तत्संस्कारानुसारेण च लोकानां प्राय आचार-स्तथैव स्यादित्याह यथेति । जनानामित्यूहनीयम् । यथा यादृशं धर्म-गुण-गौरवपूर्णं कुलं वंशः । तथा तादृश आचारः आचरणं कार्य्यानुष्ठानं लौकिकव्यवहारोऽपि भवतीति शेषः । वंशपरम्परागत-शास्त्रानुसारेण लोकानां शिष्टाचारः प्रवृत्तिः कार्य्यानुष्ठानादिकञ्च दृश्यते । अतः कुलाचारः शिष्टाचारः लोका-चारः स्थानाचारश्च पृथक्त्वेन प्रसिद्धोऽस्ति । यथा शैलशेखर-जातस्य औषधादेः यादृशं रसवीर्य्यविपाकादिकं न तथा जल-बहुलदेशजातस्य । एवं लोकेषु च—

'सुतः पितृगुणं धत्ते धत्ते मातृगुणं सुता' । इति ।

नीतिविद्भिर्न तथा मन्यते यतः शिक्षालब्धगुणस्य उत्कटतपः-साधनस्य च वंशगत्यपेक्षा नास्ति । तथा च—

'गुणाः सर्व्वत्र पूज्यन्ते पितृवंशो निरर्थकः' ।

अन्यच्च 'दैवायत्तं कुले जन्म' इति वेणीसंहारे । अपरञ्च—

'किं कुलेन विशालेन गुणहीनस्तु यो नरः' ।

इति भट्टचाणक्ये च । व्याधकुलजातस्य रत्नाकरस्य महर्षित्वम् । दैत्यकुल-सम्भूतस्य प्रह्लादस्य सद्देवत्वञ्चेति । निरुक्त्यादि प्रागु-क्तम् ॥ ६८ ॥

पूर्व्वसूत्रोदाहरणमुखेनेदमाह स्थितेति । पिचुमर्दः निम्बतरुः

## न चागतं सुखं परित्यजेत् ॥७१॥

सुसंस्कृतोऽपि सम्यक् संस्कारेण विशुद्धोऽपि । सहकारी रसालतरुर्न भवति । निम्बस्य स्वाभाविकतिक्तत्वाच्च सति संस्कारे न सहकारो भवति । तदुक्तं कविना—

शर्करा शतभारेण निम्बवृक्षोऽप्युपार्जितः ।
पयसा परिसिक्तश्च न निम्बो मधुरायते' ॥

यस्य यः स्वभावः स तं यत्नशतेनापि न परिहरति । तदुक्तं तात्त्विकैः—

'न हि स्वभावो भावानां व्यावर्त्येतौष्ण्यवद्रवेः' । इति । 'सहकारोऽतिसौरभः' । अति प्रथितं सौरभं यस्य ॥ आम्रः । इमं सहकारयति मेलयतीति सह पूर्व्वात् करोतेः रच् । संस्कारः क्वचिमे मस्से भूषितेऽप्यन्यलिङ्गकः । क्लीवन्तु लक्षणोपेते' इति मेदिनी । संस्क्रियते इति सपूर्व्वात् करोतेः क्तः । 'सुट् भूषणे सम्पर्युपात्' सुडिति कातन्त्राः ॥ ७० ॥

दौर्लभ्यत्वात्तदुपस्थितसुखपरिहारे निषेधमाह न चेति । आगतमुपस्थितं प्राप्तम् । वर्त्तमानं यत्सुखमनुकूलवेदनीयत्तमेवपरित्यजेत् । यतो दुःख-बहुलोऽयं संसारः । सुखन्तु क्षणिकं गाढ़ान्धकारेऽस्मिन् लोके खद्योतालोकवद् दुर्लभम् । तच्च सदा प्रार्थनीयमुत्पाद्यञ्च । नित्यं दुःखस्य परिहारप्रवृत्तिर्जीवेषु दृश्यते । अतो योगसूत्रमत्रार्थे प्रमाणयति । 'हेयं दुःखमनागत मिति । उपस्थितं सुखं परिहृत्यानागतसुखलिप्सया भ्रम-

## स्वयमेव दुःखमधिगच्छति राजचर्य्यात् ॥७२॥

## न रात्रि-चारणं कुर्य्यात् ॥ ७३ ॥

---

अन्नमपि नाचितम् । परं क्वापि सुखभ्रमे दुःखं नाश्रयणीयम् । सुगमनिहतिः प्रागुक्ता ॥ ७१ ॥

राजचर्य्याया दुःखजनकत्वात्तु स्वयमिति । धातूनामनेकार्थत्वाच्चर्य्या शब्दार्थः प्रातिकूल्यम् । राजचर्य्याद्वारा प्रातिकूल्याद्राजद्रोहाद्वा लोकः स्वयमेव दुःखं कष्टमधिगच्छति । अथवा दानीं राजचर्य्यातः नृपपदाचरणादयञ्च दुःखमाप्नोति । यद्वा संसारस्य दुःखं स्वाभाव्याद् राजचर्य्यातोऽपि दुःखमयत्वमधियन्ति प्राणिनामस्मिन् अन्यस्मिन् कर्म्मणि दुःखानुभवः । 'चर्य्याचरणमेवाऽप्युपासना भवतीति' । चर गतौ, चरणम् । 'गमनमदचरयमश्च' इति यता चर्य्यापतेति सूत्रकारसम्मतम् ॥ ७२ ॥

रात्रौ विचरणे विप्रलम्भस्तद्विवेकमात्र नेति । रात्रौ रजन्यां चारणं भ्रमणं चंक्रमणमिति । तथा तत्र कुर्य्यात् । तदुक्तं सुश्रुतापरे —

"चिरं चंक्रमणं रात्रौ पजीर्णे भोजनं दिवम्" ।

रात्रौ चर्य्यायां वायुप्रकोपः अग्निमान्द्यं शरीररौग्यादिकं भवति । दशघटिकातःपरं रात्रौ दीर्घमार्गभ्रमणे स्वास्थ्यहानिश्च । तदुक्तं वैद्यके —

"दिवसे भ्रमणं कृत्वा स्वप्याद्रात्रौ यथाविधि" ।

चरणमेव चारणं स्वार्थिकः प्रत्ययः । अन्यत्र चारणो वन्दि-विशेषः

**न चार्द्धरात्रं स्वप्यात् ॥ ७४ ॥**

**तद्विद्भिः परीक्षेत ॥ ७५ ॥**

---

कुशीलवश्च। चर गतौ, चारयन्ति कीर्त्तिम्। चरतेर्णिजन्ता-न्मुट्। नन्द्यादि-ल्युः ॥ ७३ ॥

स्वास्थ्यहानभयादर्द्धरात्रे शयन निषेधमाह नेति। अर्द्धरात्रं निशीथकालः। रात्रेरर्द्धं मध्यभागः। तदा न स्वप्यात्। न स्वपे-दिति पाठो न श्रेयान्। स्वपेदिति क्वचित् पाठस्तत्रापि नञ् श्रेयम्। तत्काले शय्यारोहणं न विधेयम्। नात्यसंवेशनं नात्यमुत्थानञ्च युक्तम्। रजन्याः पूर्व्वयामात्परं शयनं पश्चिमयामशेषे समुत्थानं हितकरम्। परमर्द्धरात्रकालं व्याप्य स्वप्यादिति। दिवानिद्रा परिहार श्रेयान्। अजीर्णरोगे दिवसे निद्रा हितकारिणी। अनियतकाले निद्राहार-स्नान-भ्रमणे रोगसम्भावना प्रबलेति। अन्यदेशके भारिकाचारतत्त्वे च बहुधा प्रपञ्चितमस्ति। रात्रेरर्द्ध-मर्द्धरात्रम्। 'अर्द्धः सर्व्वैकदेशे' इत्यादिवचनात्। ञिष्वप् शये, अदादित्वाल्लुकि 'हलश्चेति' षत्वा भर्द्धमिति सिद्धम् ॥ ७४ ॥

शयनाशनगमनादीनां परीक्षणं विदुषामेवोचितमित्याह तदिति। तदर्द्धरात्रे शयनं भ्रमणमशनञ्च युक्तमयुक्तमिति सुधीभिः परीक्षेत, शास्त्रयुक्त्या वैधमवैधञ्च तत्सर्व्वं ज्ञात्वा किं किं फलं स्यादत्र किं वानिष्टं तत्तद्विषये परीक्षां कुर्युः। कार्य्यतो मानव विवेकं विना केवलं च वाक्यात्रेण फलानुभवो

परगृहमकारणतो न प्रविशेत् ॥७६॥
ज्ञात्वापि दोषमेव करोति लोकः ॥७७॥

---

न स्यात्। अविज्ञाय तु विचारानुष्ठानानुभवैर्विना यथेच्छं कुर्वन्तो निरन्तरं क्लेशमधियन्ति। 'न तद्विपरीतेत' इति पाठ-भेदे तदा परीक्षाकरणे न विपरीतेत, नापि विपरीतं कुर्या-दिति। यदा प्रागुक्तविषयेषु स्वयमेव दुःखमधिगच्छन् विरुद्ध-भावेन प्रमादात् रौन्द्र्या वा परीक्षां न कुर्यात्तेन न्याय्यहानिः स्यात् ॥ ७५ ॥

प्रयोजनेन विनान्यस्य गृहे प्रवेश-प्रतिषेधमाह परेति। परेषामन्येषां गृहं परस्यासितव्यालयं अकारणतः किमपि कारणं विना। गृहादेः स्वामिनामनादेशेन पूर्वपरिचयविना-भावाच्च यत्र तत्र नाभ्यर्गच्छेत्। गमने तादृगद्रव्यनष्टे च चौर्यकार्यत्वादपराधो भवेत्। अत्र गृहमित्युपलक्षणम्। अप्रवेश्यं पराधिकृत-स्थान-द्रव्य-शस्य-क्षेत्रोद्यानादिकं बोध्यम्। दानानुमतिमन्तरेण परद्रव्यग्रहणे चौर्यं स्यादिति केचन सूरयः प्राहुः। धर्मशास्त्रकारास्तु परद्रव्येष्वभिध्यानमपि दुरितजनकं वदन्ति। यत्र यद् योग्यं लभ्यं तत्राविधभावेन कोऽपि जनः प्रतिपन्नको भवेद् यदपराधे, स तदा न्यायालये अभियोज्यः ॥ ७६ ॥

प्रमादादज्ञानाद्वा परद्रव्यादिकं बहुपि हरणादिरूपदोषं करोति तदाह ज्ञात्वापीति। नात्रो जन इति ज्ञातविरुद्ध-

**शास्त्रप्रधाना लोकवृत्तिः ॥७८॥**

**शास्त्राभावे शिष्टाचारमनुगच्छेत् ॥७९॥**

---

मम् । तद्द्रव्यादि परकीयमिति निश्चितं ज्ञात्वा विदित्वापि द्रव्यादिकं लुण्ठन् पेटकादौ प्रविश्य वा दोषमपराधं करोति । अतः परकीये द्रव्ये पेटकादौ प्रवेशे च अनुमतिः प्रदानञ्च अपेक्षणीयम् । प्रसह्य नैव कुर्य्यात् । 'दोषोऽपराधो विप्रतिरन्याय-श्चे'ति ॥ ७७ ॥

लोकवृत्तेः शास्त्रमूलकत्वमाह शास्त्रेति । शास्त्रं हितानुशासनम् । यद्वा शासनोपदेष्टृ-प्रमाणं वा । अथवा शास्त्रं ऋग्वेदादि । तत्प्रधाना यस्या लोकवृत्तौ इति बहुब्रीहिः । तादृशी लोकवृत्तिः, शास्त्रप्रधाना शास्त्रानुशासनमूलिका भवतीत्यर्थः । शास्त्रेषु लोकवृत्तिरुपदिष्टा । शास्त्रविध्यनुसारेण लोकाः कार्य्या-कार्य्ये अवधार्य प्रवर्त्तन्ते । यादृच्छिक प्रवर्त्तने तु नैष्फल्यं कार्य्य-हानिश्च । तथा च स्मृतौ—

'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः' ।

इत्यादि प्रमाणे, शास्त्रनामानि प्रागुक्तानि । नास्ति न्याय-वैद्यक-ज्योतिष-वास्तु शास्त्राणि तेषु अन्तर्नीतानि । अन्यदस्ति श्रीमधुसूदन कृते प्रस्थानभेदे । 'लोक प्रवृत्तिरिति' पाठभेदे शास्त्रप्रतीत्यनुसारेण लोकप्रवृत्तिर्भवतीति ॥ ७८ ॥

अनुशासनाभावे लोकयात्रा निर्व्वाहोपायमाह शास्त्राभाव इति । शास्त्राणां श्रुतिस्मृतीतिहासपुराणवाक्यानाम् । यथा-

नाचरिताच्छास्त्रं गरीयः ॥८०॥

---

यत्र तु तेषामभावो भवति तत्र शिष्टानां मनुव्यासादीनां तादृशपरवर्त्तिनां जनानामाचार्य्याणाश्चाचारमनुष्ठानपद्धतिमनुगच्छेदनुसरेदिति । यतो धर्म्मनिष्ठ-सूरि-जनाचरणमपि शास्त्रोपदेशवत् प्रमाणम् । एवं मिताक्षराव्याख्यानादौ शिष्टाचार-कुलाचार-देशाचार-व्यवहारादीनां प्रामाण्यमङ्गीकृतम् । शिष्टलक्षणमुक्तं सूरिभिः—

'न पाणिपादचपलो न नेत्रचपलो मुनिः ।
न च वागङ्गचपल इति शिष्टस्य लक्षणम्' ॥

शिष्टापरिग्रहाधिकरणे भगवता शङ्कराचार्य्येण मनुव्यासादीनां शिष्टत्वमुक्तम् । नीतौ तु बृहस्पति-भार्गव-वातव्याधि-विशालाक्ष-बाहुदन्तीपुत्र-पिशुन-कौटिल्यादीनां यदाचरणं तदनुकार्य्यम् । महतामुपदेश एव ग्राह्यो नापि तेषामनुष्ठितकार्य्ये दोषानुसन्धानम् ॥ ७८ ॥

शिष्टाचरणाच्छास्त्रस्य दौर्बल्यमाह नेति । आचरिताच्छिष्टजनानुष्ठिताचारात्परिपैर्व्यवहारात् । शास्त्रं बृहस्पति-प्रभृतिविरचित मनुशासनं वाक्यं सूत्रादि वा । न गरीयः नातिगवेन श्रेष्ठं भवतीति । यत्र शास्त्रकर्त्तां बहुधा मतभेदोऽस्ति यत्र च द्वयोः शास्त्रलोकाचारयोः स चास्ति । तत्र तयोर्लोकाचारस्य प्रत्यक्षत्वाच्छास्त्रस्य तत्प्रणेतृणां परोक्षत्वादाचारो गरीयान् । यदा सन्देहे कस्य मतं ग्राह्यं कस्य वा मान्यं तद्दुर्निरूप्यम् । शास्त्राभिप्रायस्य

## दूरस्थमपि चारचक्षुः पश्यति राजा ॥८१॥

काललुप्तत्वात् सर्व्वेषाम् न सुलभः। अतस्तदार्य्यपरम्परागतरीतिमनुपालयेत्। अन्यथ ये तु शास्त्रानभिज्ञास्ते प्राचीनाचारमेवानुष्ठाय कार्य्यं सम्पादयन्ति। 'निदेशग्रन्थयोः शास्त्र'मित्यमरः। शासनमाज्ञा निदेशः। शासु अनुशिष्टौ, शिष्यतेऽनेन। ततः 'सर्व्वधातुभ्यष्ट्रन्'। अतिशयेन गुरुर्गरीयान्। 'प्रियस्थिर' इत्यादिना सिद्धम् ॥ ८० ॥

राज्ञः चारनेत्रेण दूरस्थ-विषयावलोकनमाह दूरेति। राजा नृपो भूपाल इति। चारचक्षुः दूतनेत्रः। चारो दूतविशेषश्चक्षुर्यस्य सः। दूरस्थं व्यवहितं राष्ट्रविषयं सर्व्वम्। समीपस्थमिव। पश्यति अवलोकयतीति। स्वस्थानस्थितेन राज्ञा दूतेन कारस्थितं वस्त्विव विश्वस्तत्वेन सर्व्वमवलोक्यते। तथाच—

'ईक्षामात्रेण तदभुङ्क्ते राजैवाखिलेश्वरः'।

इति सांख्यसारे। अन्यदुक्तं प्राचीनैः 'राजानश्चारचक्षुषः' इति। अपरञ्च—

'राजा पश्यति चारेण धिया पश्यति पण्डितः'।

'भूले पश्यन्ति बर्व्वरा'इति पूर्व्वमुक्तम्।

बर्व्वराः पामरा मूढास्त्वज्ञाश्चेति। 'स्याद् दूरं विप्रकृष्टकम्'। दुःखेन इयते। 'दूरोणो लोपश्चे'ति साधुः। चक्षुरिति, चक्ष्यते अनेनेति चक्षिङ्धातोः 'चक्षेः शिच्च' इत्यौणादिकसूत्रादुसिः। शित्वादनार्द्धधातुकत्वात् ख्याडादेशो न भवति ॥ ८१ ॥

गतानुगतिको लोकः ॥ ८२ ॥

जीविभिस्तस्मिन्नाजीवेत् ॥ ८३ ॥

---

लोकाः प्रायशः समयपरम्परागतविषयमनुधावन्ति तदाह गतेति। गतं तदनुपयातं गतिर्यस्य सः। अविवेकेनातीत-लोकपथानुवर्त्ती। तादृशः साधारणो लोको भवति। सन्तः परीक्ष्य विषयमेकं हित्वा अन्यतरम् उपादेयं भजन्ते, न तु सर्वे प्राकृता जनाः विमृश्यकारिणः स्युः। साधारणा लोकाः प्रति-विषयं विचिन्त्य न किमपि कुर्वन्तीति भावः। लोकायतिका अपि तथैवाचरन्ति। नापि सर्वेषां वस्तुविवेकबुद्धिर्वर्त्तते। ते लोकदृष्टान्तानुसारेण सर्वं सम्पादयन्ति। अतस्ते लोकप्रवाह-मध्ये धावन्ति विषयेष्विति। तथाच महाकवि भासेनोक्तम्—

"कालक्रमेण जगतः परिवर्त्तमाना
चक्रारपङ्क्तिरिव गच्छति लोकपङ्क्तिः"।

'लोकस्तु भुवने जने' इति। नापि सर्वं पुराणमेव ग्राह्यं वर्त्तमानमपि हितकरमुपादेयम्। तदुक्तं कविवरेण—

"पुराणमित्येव न साधु सर्वम्
न चापि काव्यं नवमित्यवद्यम्"। इति।

पूर्वसूत्रमन्यत्॥ ८२॥

जीवानां गतानुगतिक-रीत्या जीवन-निर्वाहः स्यात्तदाह जीवेति। जीविभिर्मानवैः प्राणिभिर्वा। अस्मिन् गतानुगति-करीतिमनुसृत्य तादृशमुपायमाश्रित्य च। प्राणीचेज्जीवनयात्रां

## यमनुजीवेत्तं नापवदेत् ॥ ८४ ॥

सम्पादयेत्। नहि प्रत्यहं सर्वे लोकाः प्रत्येकं वस्तु विचार्य्या-
वलोक्य च सम्यक् कार्य्यं कर्त्तुं शक्नुवन्ति। प्राचीनागतनियमा-
नुसारेण व्यवहारिकमन्यद्वा किमपि निर्वाहयन्ति। महाजना-
नुसृतपथानुसारेण सर्वो लोको गच्छेत्। तदुक्तं भारते 'महाजनो
येन गतः स पन्थाः' इति। धर्मशास्त्रकृदपि—

'येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्' इत्यादि प्रागुक्तम्।

नीतिविदस्तु—'नहि सर्वेषु विषयेषु पैतामहपथमनुसरेत्'।
तदुक्तं भामतीकारेण 'नहि पूर्वजो मूढ आसीदित्यात्मनापि
मूढेन भवितव्यम्' इति। अतः सद्विचारविषये तत्सरण्यनु-
सरणम् ॥ ८३ ॥

यमाश्रित्य जीवति तस्यापकारे निषेधमाह यमिति। यम्
भूमिपालं पुरुषधौरेयमन्यद्वा। समवलम्ब्य जीवेत् जीविकाद्य-
र्जनेन प्राणान् धारयेत्। तमहान्तं पुरुषं भूमिपं वा लोको
नापवदेत्। यदि वा यतो जीविका भवेत्तदा तदपवादकरणे
राजविरोधो भवेत्। अन्यानुपकारकाणाम् प्रति कृतघ्नता चेति।
यत्तु 'सर्वः स्वार्थवशाज्जनोऽभिरमते कस्यास्ति को वल्लभः' इत्युक्तं
तदापाततः दृष्ट्या न तु परमार्थतः। धनमानपुण्यधर्म्मादिभिरुप-
कार्य्योपकारकत्वे स्वार्थपरत्वादि-विषयः सुचिरं तिष्ठत्येव। एषैव
रीतिः लोकस्थितिविधायिनी ॥ ८४ ॥

तपः सार इन्द्रियनिग्रहः ॥ ८५ ॥

दुर्लभः स्त्रीबन्धनान्मोक्षः ॥ ८६ ॥

---

योग-ध्यान-तपसां मध्ये श्रेष्ठमाह तप इति । इन्द्रियाणां चक्षुरादीनां ज्ञानकर्मेन्द्रियाणामुभयेषां निग्रहो निरोधः संयमः विषयतो निवृत्तिरिति यावत् । स च तपसः सारः तपश्चर्यायाः प्रधानम् । येषामिन्द्रियनिग्रहो नास्ति ते नैव तपस्विनो भवन्ति । निगृहीतेन्द्रिया एव तपसः सारं लब्धुं शक्नुवन्ति । तथा च श्रुतिः 'व्याघ्रपाचन्द्रस्तत्वमेति' इति । तपः कृच्छ्रचान्द्रायणादि । तत्र यमाद्यष्टाङ्गयोगेषु नियमान्तर्गतम् । 'तपसा कल्मषं हन्ति' इति स्मृतिः । 'तपोऽनोकान्तरेऽपि च । चान्द्रायणादौ' इति मेदिनी । अन्यत्रोक्तं—

"वनेऽपि दोषाः प्रभवन्ति रागिणाम्,
गृहेऽपि पञ्चेन्द्रिय-निग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते,
निवृत्तरागस्य गृहं तपोवनम्' ॥

'तपःसारमिन्द्रियनिग्रहः' इति पाठभेदे सञ्जीविकाया जीवितस्य सा सारं प्रधानमिन्द्रियसंयम इति ॥ ८५ ॥

नारीबन्धनान्मुक्तिलाभः संसारे पुंसां दुर्लभस्तमाह दुरिति । स्त्रीभिर्नारीभिः संसारे अस्मिन् मानवस्य यद्बन्धनं ममासक्तिः । तस्मान्मोक्षोऽव्याहतिलाभो बन्धनच्छेद इति । दुर्लभः-कृति-

## स्त्री नाम सर्व्वाशुभानां क्षेत्रम् ॥८७॥

## न च स्त्रीणां पुरुष-परीक्षा ॥ ८८ ॥

---

क्लेशेन लभ्य कदाचित् केनापि रूपमाराधनादिना, तल्लब्धु शक्यते न सर्व्वं इति सार.। संसारकारालये रमणीरज्जु पुमांस दृढभावेन बध्नाति ये तु सर्व्वस्व मीपरमात्मबुद्ध्या परित्यज्य मन्यस्यन्ति ते तस्माद्बन्धनान्मुच्यन्ते। अन्येतूर्णनाभ इव स्वकर्म्मणा स्त्र्यादिभिव संसारजाले बद्धा स्युरिति ॥ ८६ ॥

प्राङ्नारीणां संसारबन्धहेतुत्वमुक्ता सम्प्रति अशेषविघ्नाकरत्वन्तासामुच्यते स्त्रीणामिति। अशेषां काम क्रोध विषादादीनामशुभानाममङ्गलानां क्लेशानाञ्च क्षेत्रमाधार उत्पत्तिस्थानम् । स्त्री नारीति। शुभस्याप्याकर स्त्री मन्तव्या तत्पश्चादुच्यते। गर्भे धर्म्मांणि मपत्यजनने स्नेह प्रीति वर्द्धने परिचर्य्यां सहिष्णुतादौ च। 'क्षेत्र पत्नी शरीरयो'। 'क्षेत्र शरीरे केदारे। सिद्धस्थानकलत्रयो' इति मेदिनी। क्षि निवासगत्यो, क्षीयते अनेन। तन् क्षिधातो ष्ट्रन् प्रत्यय ॥ ८७ ॥

स्त्रीणां पुरुषपरीक्षायै प्रायोऽधिकाराभावमाह न चेति। स्त्रीणां योषितामबलानामिति। पुरुष परीक्षा। पुरुषाणां नराणां परीक्षा सम्यक पर्य्यालोचनपूर्व्वकदर्शनम्। नच युक्त स्यात् प्रयोजनाभावात्। पुरुषतो नारीणां बुद्धेर्द्दैन्यात् विवेकाभावात् स्वमार्गद्दिष्णुतया च पुरुषैरेव तासां परीक्षणं युक्तं नापि

**स्त्रीणां हि मनः क्षणिकमेकस्मिन्न तिष्ठति ॥८९॥**

**अशुभद्वेषिणः स्त्रीषु न प्रसक्ताः ॥९०॥**

---

ताभिः पुंसाम् । अत्र पुरुषैरेव विवाहात् प्राक् स्त्रीणां सम्यक् परीक्षणं विधेयम् । तथाच शास्त्रज्ञाः 'दाराः । परीक्ष्यन्ते प्रयत्नेन पूर्व्वमेव करग्रहात्' इत्याहुः । सामुद्रिकैर्लक्षणैश्च कन्या विवाहात् प्राक् परीक्षणीया । परमन्याः क्लीवा जड़ा व्यङ्ग-बधिराः चिरपीड़िता पानसक्ता उन्मत्ताः पुमांसोऽपि उपय-मासमर्था इति केचन नीतिविदः । अन्यत्र परीक्षा दिव्यक्रिया । सा च मनुर्षिबृहस्पति-प्रोक्ता नवविधा धर्म्मशास्त्रनिबन्धे दिव्यतत्त्व-सन्दर्भेऽस्ति ॥ ८८ ॥

नारीणां स्वाभाविक-मानसचाञ्चल्यमाह स्त्रीणामिति । स्त्रीणां नारीणामयत्नानाम् । मनः चित्तं नैसर्गिकचापल्यादधिकमस्थिरं चञ्चलमिति यावत् । अतः एकस्मिन् विषये दीर्घकालं स्थातुं नार्हति । सहसा यत्नेन विषये एकस्मिन् स्थैर्य्यं लब्धुं शक्यते । यद्यपि उभयोरेव स्त्रीपुंसोश्चित्तचाञ्चल्यमस्ति । तथापि स्त्रीणां सारल्यात् कोमलत्वाधिकत्वज्ञयति. वस्तुस्वाभाव्याद्वा । अत एताः संग्रामादावयोग्याः । अन्याद् यत्र तत्र प्रयुक्तानां तासां स्वाभाविकचञ्चलतया अपत्योत्पादनशक्तेश्च हानिर्भवति । पूर्व-मुक्तमपरम् । अन्यदस्ति वृहच्चाणक्ये ॥ ८९ ॥

अशुभद्वेषकारिणां नारीषु प्रसक्तिनिषेधमाह अशुभेति ।

## यज्ञफलज्ञास्त्रिवेदविदः ॥९१॥

---

अशुभस्यामङ्गलस्योपद्रवस्येति यावत्। द्वेषिणः द्वेष्टारः दोष-द्रष्टारः। शुभाकाङ्क्षिणो लोकाः। ते स्त्रीषु नारीषु। न प्रसक्ताः न सम्यगासक्ताः नानुरक्ता भवन्तीति शेषः। 'अशुभ-द्वेषाः स्त्रीषु न प्रसक्ताः' इत्येवं पाठान्तरमपि दृश्यते। अशुभ-वेषा मलिनवेषाः पुरुषा रुग्णा अस्वस्थास्त्या वा नारीषु न चेष्टा-भवन्तीत्यर्थः। ये तु शुभाशयास्ते स्त्रीषु निरन्तरं समासक्ता न स्युः। तेन स्वास्थ्यमायुः यशसो बुद्धेश्च प्राखर्य्यं वर्धते। स्त्रीषु अत्यासक्ताः दुर्बलाः क्षीणाः पीडिताः प्रायः स्मृतिहीनाश्च भवन्ति। ये मध्यमासक्तास्ते शक्तिमन्तः। अनासक्तास्तु ओज-स्विनो भवन्ति। अन्यदेशके कामसूत्रादौ च विषयेऽस्मिन् दृश्यते॥ ९०॥

यज्ञकर्मविदो वेदज्ञत्वेन प्रशंसनमाह यज्ञेति। यज्ञानां अग्निष्टोमाश्वमेधवाजपेयराजसूयानां पञ्चमहायज्ञानाञ्च यानि फलानि स्वर्गलाभ ब्रह्महत्यापनोदन-स्वाराज्यादीनि। तज्ज्ञातार ऋषयो मन्त्रद्रष्टारः। अन्ये च ऋत्विजः। त्रिवेदान् त्रयीः ऋग्यजुः सामानि। तद्विदो ज्ञातारः ते सम्यग्जानन्तीत्यर्थः। नान्ये अज्ञा लोका नास्तिका वा। अथर्ववेदस्य ऋगादिषु अन्त-र्भावः। वेदानां पौर्वापर्य्यालोचनसरणौ प्रमाणाभावः। ये तु तादृशं मन्यन्ते पुरातत्त्वदृष्ट्या न तु ते तात्त्विकबुद्ध्या पौर्वापर्य्यं रहस्यज्ञाः। तेषाम् अनिर्दिष्टकालागमत्वे ईश्वरप्रणीतत्वेना-

## स्वर्गस्थानं न शाश्वतम् ॥८२॥

---

लौकिकार्थसमर्पकत्वेन च या पौर्वापर्य्यां भाव:। वेदविदो हि परमेशं जानन्ति। तथा च श्रुति: 'नावेदविन्मनुते तं बृहन्तम्'। 'तन्त्वौपनिषदं पुरुषं पृच्छामि' इति। तं परमात्मानमित्यर्थ:। 'यज्ञ: स्यादात्मनि मखे नारायण हुताशयो:' इति हैम:। यज्ञ देवपूजादौ, इज्यते यजमानेन वा। 'यजयाचन' इत्यादिना नङ्। ज्ञीन् ऋगादीन् विदन्तीति वेत्ते: 'सत्सु द्विष' इति क्विप्। पञ्चमहायज्ञा: स्मृतौ प्रसिद्धा:। यज्ञसूत्रं कात्यायनाश्वला-यनापस्तम्बबौधायनादिष्वस्ति ॥ ८१ ॥

कर्मफलेन प्राप्त स्वर्गलोकस्य फलभोगात्परं क्षयित्वमाह स्वर्गेति स्वर्गस्थामरलोकस्य यत्स्थानं देवनिवासभूमि:। न तत् शाश्वतं नैव नित्यं सनातनमिति। तदुक्तं गीतायाम्—

'क्षीणे पुण्ये मर्त्यलोकं विशन्ति'।

इत्यत्रापि प्रकरण प्रसङ्गादायातम्। तत्रैव च—

'एकया यात्यनावृत्तिमन्यया वर्त्तते पुन:'।

श्रुतिरपि छान्दोग्ये 'तस्मिन् यावत् सम्पातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते' इति। अतोऽश्वमेधादि यागजन्यापूर्व्वभोग-विषयस्य स्वर्गस्यानित्यत्वम्। तथा च न्याय-विस्मय:-स्वर्ग: क्षयी मखापूर्व्वजन्यत्वात् घटादिवत् यद् यज्जन्यं तत्तदनित्य-मिति। शाश्वतम् आत्मस्वरूपावगतिरिति चौपनिषदा:। सिद्ध-वस्तुविषयत्वेन ब्रह्मार्थकतावगमस्याक्रिया जन्यत्वेन च सना-

**यावत् पुण्यफलं तावदेव स्वर्गफलम् ॥८३॥**

**न च स्वर्गपतनात् परं दुःखम् ॥८४॥**

---

तनत्वात्। अव्यदाकारे भाथे भामत्यामह्वैतसिद्धौ चास्ति। स्वर्गः। स्वर्ज अर्ज्जने, सुष्ठु अर्ज्यते इति कर्म्मणि घञ्। आगतम्। अग्र पत गतौ, अगति। बाहुलकादत्। गमद्द भव 'तत्र भवः' इत्यण्। अनित्योऽव्ययानां टिलोपः। 'वड्डिपटिलोपवचनादिति' वार्त्तिकादिति ज्ञापकात्। ८२ ॥

स्वर्गभोगस्य पुण्यकर्म्मफलस्य परिमितत्वमाह यावदिति। पूर्व्वसूत्रोदाहरण भूतत्वेनेदमुत्सूत्रमिति केचनाहुः। यावत्कालं व्याप्य पुण्यस्य सुकृतस्य फलं विद्यमानं भवेत्तावत्कालपर्य्यन्तं स्वर्गप्राप्त-पुरुषेण तद् भुज्यते। तत्समाप्तौ तस्य पुनरागति र्मर्त्यलोके, छान्दोग्य-पञ्चमप्रपाठकोक्त पञ्चाग्निविद्या नियमेन भवतीति। सुगममन्यत्। पुण्यकर्म्मणा मर्त्यलोके कीर्त्तिः सुखं परोपकारः सुभिक्षा च वर्द्धते। परकाले अमरधाम लाभः। काप-निरुक्तौ प्रागुक्ते। ८३ ।

अमरलोकात् पतनमति-क्लेशकरन्तदाह न चेति। स्वर्गपतनात्। स्वर्गात् शुभकर्म्मफल-भोगानन्त' पतनात् मर्त्त्यलोकागमनात्। परमधिकं दुःखं नास्तीति। मर्त्त्येऽनित्यक्षणिकसुखभोगापेक्षया अमरधाम-सुखभोगः श्रेयानिति विशेषदुःखजनकन्ततः पतनम्। उक्तञ्च सांख्यसूत्रैः 'दृष्टवदानुश्रविकः सह्य-

देही देहन्त्यक्त्वा ऐन्द्रपदं वाञ्छति ॥ ८५ ॥

दुःखानामौषधं निर्वाणम् ॥ ८६ ॥

---

मिश्रद्विषयाभिगयुक्तः । तद्विपरीतः श्रेयान् स्वकाल्पलक्ष-विज्ञानात्' इति । श्रुतौ तथैवोक्तम् । 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते' । कर्मणा चितो लोकः कर्मचितः कर्मणा लब्धः । पुण्येन चितः पुण्यचितः । तयोरुभयोर्लोकयोः पुनरागतिर्भवति । 'न च स्वर्गफलं दुःखम्' इति पाठान्तरमस्ति । तदाऽप्यर्थः सुगमः । मर्त्यलोके दुर्गतिर्गर्भ-वासः पुनर्मृत्यादिकं गजनयं दुःखम् । यद्वा स्वर्गेऽपि तारतम्य-जनितं दुःखमस्ति ॥ ८४ ॥

शरीरिणां मनुष्याणां देह-परिहारानन्तरमैन्द्रपदस्याभीप्सा भवति तदाह देहीति । शरीरी देहभृत् जीवः । देहं त्यक्त्वा परित्यज्य संसारदुःखग्रन्थ-निपीडनेन ततः ऐन्द्रपदं देवराज्यपद-मनन्त-सुखाय वाञ्छति प्रार्थयति । यथा निदाघे-मार्गगामिनो गुरुभारेहन-श्रान्तस्य सुस्निग्ध-समीरणच्छाय-द्रुमतले विश्रामाय श्रेयस्तादृग् संसारानल-सन्तप्तस्य जीवस्यैन्द्रपदमिति । देही । देहोऽस्यास्तीति । दिह उपचये, दिह्यते । दिहघञ् । इन्द्र-स्येदमैन्द्रम् । 'तस्येद'मित्यण् । यत्र 'न वाञ्छति' इति क्वापि पाठोऽस्ति, तदा मन्दाः संसारसुखात् परं देवराजपदं न वाञ्छन्ति नाभिलषन्ति, विषकीटवत् संसारमेव भुञ्जते, तद्विषये मौढ्या-दिति ॥ ८५ ॥

## अनार्य्य-सम्बन्धाद्वरमार्य्य-शत्रुता ॥८७॥

दुःखात्यन्तनिवृत्त्युपायमाह दुःखानामिति। दुःखानां प्रतिकूलवेदनीयानां परितापानाम्। औषधं परिनिवृत्तिहेतुः तज्ज्ञानहेतुर्वा। यथौषधेन रोगोपशान्तिस्तद्वत् निर्व्वाणेन दुःखनिवृत्तिः। 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' इति कापिलाः। 'तदत्यन्तनिवृत्तिर्हान'मिति पातञ्जलाः। निर्व्वाणं कैवल्यं मोक्षश्चेति। 'सम्यग्दुःखापायादपवर्गः' इति गौतमाः। 'पदार्थतत्त्वज्ञानान्निःश्रेयसाधिगमः' इति काणादाः। 'आत्मस्वरूपाधिगमः' इति वेदान्तिनः। 'द्विविधकर्म्मोच्छेदात् परमनश्वरतजीवस्योर्द्ध्वमलोकाकाशे गमनमिति' जैनाः। एतदर्थे 'तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्'। तत्त्वसाक्षात्काररूपौषधेनैव दुःखं रोगः सम्यग् नश्यतीति रहस्यम्। अन्यत् तत्त्वार्थाधिगमसूत्रभाष्यादावस्ति। ओषः प्लोषो दीप्तिर्वा धीयतेऽत्र। धाञ् धारणपोषणयोः। ततः किः। निर्व्वाणम्। वा गतिगन्धनयोः निर्वाति। 'गत्यर्था' इत्यादिना क्तः। 'निर्वाणोऽवाते' इति साधुः॥८६॥

नीच-सङ्करणादपि श्रेष्ठेषु विरोधः श्रेयान् इत्याह अनार्य्येति। अनार्य्यस्य नीचस्य अवरादेय। सम्बन्धात् सम्मेलनात् सङ्करणादिति। आर्य्येषु महाकुलजातेषु महात्मसु वैरं वरं श्रेष्ठमुत्तममिति। तथा च भारविः—

"अमुष्यन् मूर्तिमनार्य्य-सङ्गमा
वरं विरोधोऽपि समं महात्मभिः"। इत्युक्तं प्राक्।

निहन्ति दुर्वचनं कुलम् ॥८८॥

न पुत्र संस्पर्शात् परं सुखम् ॥८९॥

---

अन्यत्र राजनीतौ—

'दुर्जनैः सह सम्बन्धात् सज्जनोऽपि विनश्यति' ।

दस्यु-तस्कर-पामर-सम्बन्धेन धनलाभात् साधुसम्बन्धेनालाभोऽपि हितकरः । तादृशसम्बन्धाल्लाभे हानिरयशश्चभाविनी । साधुसङ्गे जाते धनालाभेऽपि शान्तिर्भवेदिति । चौराद्यसम्बन्ध-मदसाधुसम्बन्धः । यथः शर्करामन्नयत् स्वाधुसम्मेलनम् ॥८७॥

लोकेषु कुत्सितवाक्य-प्रयोगो स्वीय कुलविनाशमात्र मेति । दुर्वचनं गर्हितवाक्यं परं निहन्ति गौरवहीनं करोति मधुर-मपि वदेत् । अतः स्वकुलगौरवरक्षणाय कार्य्ये लोकव्यवहारेऽपि च न वदेत् कुत्सितं वचः । 'नातिदुर्वचनं कुलमिति' पाठा-न्तरम् । तादृश पाठे कुलं नातिदुर्वचनं नाति निन्दनीयम् । यतो दोषान्वयं लोकस्यैव न तु तत्कुलस्य । पुरुषकार्य्यदोषेण कुले दोष आपतति । कुलमादौ परिचितं पश्चात् तस्य परि-चयः । पूर्वपाठोऽत्र मनोहरः ॥ ८८ ॥

संसारे तनय-स्पर्शनात् परमधिकसुखाभावस्तु नेति । पुत्रस्यात्मजस्याधिकप्रियस्य । संस्पर्शादङ्गादौ समुपसर्पणात्तस्य मुख-दर्शनाद्वा । इतःपरं श्रेष्ठं सुखस्पर्शजनकमनुभवनीयं नास्ति । तथाच 'पुत्रो नाम लोकोऽयम्' । महाभारते च—

विवादे धर्म्ममनुस्मरेत् ॥१००॥

निशान्ते कार्य्यं चिन्तयेत् ॥१०१॥

---

'पुत्रः प्रियाणामधिको भार्य्या च सुहृदाम्वरा'। इत्युक्तं प्राक् । श्रुति, स्मृतिरप्यत्रार्थे प्रमाणम् । 'अपुत्रस्य गतिर्नास्ति'। 'पुत्रहीनं गृहं शून्यमि' ति लघुचाणक्यवाक्येन पुत्रस्य श्रैष्ठ्यं प्रख्यापयति। अतस्तत्संसर्गे अतिसुखं स्यादिति। मागुक्त-मन्यत् ॥ ९९ ॥

विवादे उपायान्तरमाह विवादेति। विवादे धनसम्पदादेर्विरोधे समुपस्थिते कौशलेन धर्मेन च यदि मीमांसा न भवेत्तदा धर्म्मं लोकविधारकं श्रेष्ठोपायमनुस्मरेदनुतिष्ठेत। विवादमीमांसार्थं अन्योपायमनपेक्ष्य धर्म्माश्रयणं प्रधानमुपायः। अद्यत्वेऽपि धर्म्माधिकरणे सत्यनिरूपणाय धर्म्मोद्देशे न्यायाधीशः शपथं कारयति। एवमपि समाजिकेषु धर्म्माश्रयेण विवादो मीमांस्यते। यत्र मान्वोक्तः सामासिको धर्म्मः स सर्व्वेषामाश्रयः। अनुस्मरेदित्यत्र पश्चात् स्मरणतो हि प्राग् धर्म्माश्रयणमनुष्ठानञ्च श्रेयः। अतः अनुश्रुतिरनुसरणार्थो युक्तः। 'विवादे कार्य्यमनुस्मरेत्' इति सूत्र पाठभेदे, विवादे समुपस्थिते: कार्य्यं स्वापराजयजनकं कर्म्मानुचिन्तयेदिति। येन कर्म्मणा स्वोत्कर्षो भवति तदेवानुसन्ध्यात्। अनुपूर्व्वात् स्मरतेर्लिङानुस्मरेदिति सिद्धम् ॥१००॥

कार्य्यानुचिन्तनस्य प्रशस्तावसरमाह निशेति। निशायाः यामिन्या अन्ते अवसाने रजनीशेषे, तन्मध्ये वा, निद्राविगमे शरीरेन्द्रिय-

## प्रदोषे न संयोगः कर्त्तव्यः ॥ १०२ ॥

स्थैर्य्यान्मनसः स्थैर्य्ये संजाते विषयान्तरात् प्रत्याहृतमानसः सुख-त्वेन । कार्य्यं सांसारिकं कर्म्म । अन्यद्वा धर्म्मादिकं चिन्तयेत् । स्वयं कार्य्यगुरुत्वेन मन्त्रिभिः सार्द्धं वा, यदा गाढ़तरकार्य्य-प्रणिधौ चान्येषां श्रवणायोग्यत्वमपि बोध्यम् । प्रागुक्तियाने पश्चात् मनसः स्थैर्य्यात् कामस्य सुखाकरत्वात्तस्मिन् विषयपरिचिन्तनस-म्भवेन भवतीति भावः । वासरे कार्य्यबाहुल्यात् मानसचाञ्चल्याद्वा न तथा भवति । तदुक्तं पूर्व्वगुरुभिः 'गुहस्थाने त्रियामायां चिन्तयेत् सुहृदि परामर्शं मन्त्रिभिः स्वयं वा चिन्तयेत्' इति । निशान्ते गृहे विजने वा । 'निशान्तं त्रिषु शान्ते स्यात् क्लीवन्तु भवनो-षसोः' इति मेदिनी । 'निशान्तं सदनं वस्त्यमागारं मन्दिरं पुरम्' इति वाचस्पतिः । निशेति । अम गतौ, अम्यते । निशा-यामस्यते वा । ततः क्तप्रत्ययः । 'रुष्यमत्वर' इत्यादिना नेट् । निशाया अन्तो यत्रेति वा ॥ १०१ ॥

सायंकाले कर्म्मसम्बन्ध-निषेधमाह । प्रदोष इति प्रदोषे रजनीमुखे सायंकाले दिनयामिन्योः सन्धिक्षणे इति । संयोगः केनापि कर्म्मणा सम्बन्धः तदारम्भोऽनुधावनं वा । न कर्त्तव्यः नैवोचितः । तत्क्षणस्य सन्धिरूपेणानुष्ठानायोग्यत्वादयमवकाशः सः । तदुक्तं राजनीतौ—

'चत्वारि घोररूपाणि सन्ध्याकाले विवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायञ्च विवर्जयेत्' ॥

## परायत्तेषूत्कण्ठां न कुर्य्यात् ॥ १०६ ॥

---

स्वमायासेन स्वपरहित-कीर्त्ति जनक-परवशीकरण-कार्य्याणि साधयितुं शक्यते । दानविषये पूर्व्वमुक्तं सूत्रोक्तविषयप्रसङ्गादवोच्यते ॥ १०५ ॥

परहस्तगतविषये उद्वेगकरणनिषेधमाह परेति । परेषामन्येषां वशवर्ता या । आयत्तानि हस्तगतानि यानि धनान्यन्ये विषयाश्च । तेषु उत्कण्ठामुत्कलिकामुद्वेगमिति । तन्मतिमान् न कुर्य्यात् । 'उत्कलिका तु हेलायां तरङ्गोत्कण्ठयोरपि' इति रभसः ।

"चिन्ता तु स्मृतिराध्याने स्मरणं ससृहे पुनः ।
उत्कण्ठोत्कलिके तस्मिन् अभिध्यातूभयोरपि' ।

इति शब्दार्णवे च । पराधीन-धनदर्शनेन स्वधनस्य परकरायत्तत्वेन च पुनरुद्धार सम्भावना विरहादुत्कण्ठां खेदञ्च मतिमान् न विदध्यात् । परन्तु तदर्जन रक्षण सम्भियोगाश्चिन्तनीयाः । अन्यच्च—

"पराधीनं न कर्त्तव्यं तरुणीधनपुस्तकम् ।
कृतश्चेल्लभ्यते दैवाद् भ्रष्टां नष्टं विमर्द्दितम्" ॥

उत्कण्ठा । कठि शोके, उत्कण्ठनम् । ततो 'गुरोश्च' इत्यादि सूत्रेण अः स्यात् ॥ १०६ ॥

असत्समृद्धिरसद्भिरेव भुज्यते ॥१०७॥
निम्बफलं काकैर्भुज्यते ॥ १०८ ॥

---

असदुपायार्जितधनस्यासत्पथगामित्वमाह असदिति । असतो परपीडार्थचौर्यादिना दोषमार्गेण वा आगतोपार्जिता या समृद्धि- र्विपुलधनसंपत्तिरिति यावत् । तादृशी सम्पत्तिरसद्भिः चौर- दस्यु-शठ-गणिकादिभिर्भुज्यते उपभोगः क्रियते च, यदि तस्याः भोगः सत्कार्ये व्ययः सत्पात्रे समर्पणं न स्यात् । तदुक्तं वृद्धचाणक्ये —

'मर्चितं क्रतुषु नोपयुज्यते, प्रार्थितं गुणवते न दीयते ।
तत्कदर्य-परिरक्षितं धनं चोर-पार्थिवगृहेषु भुज्यते' ॥

प्रागुक्तमन्यत् । 'असत्, स्तादौ पथिभेदे सम्बद्धायपि योषिति' इति मेदिनी । समृद्धिः, ऋधु वृद्धौ, समर्द्धनम् । ततः क्तिन् ॥१०७॥

पूर्वोक्तस्य विषयीकरण समर्थन-प्रसङ्गेनेदं प्राह निम्बेति । निम्बफलं पिचुमर्दाख्यतिक्तफलम् । काकैर्वायसैर्भुज्यते भक्ष्यते । न पुनर्लोकैः । तिक्ताधिक्यादरुचिकरत्वादिति । अतितिक्तः स्वास्थ्यहानिकरः । एतेन यथा स्वभावतिक्तं निम्बफलं तथा तद्- योग्यो भोक्ता करट इति । एवमसदुपायार्जितं धनं तस्करादिभि- रेव भुज्यते इति पूर्वोक्तवाक्यसङ्गः । 'पिचुमर्द्दश्च निम्बेऽथ' इत्य- मरः । 'काके तु करटारिष्ट बलिपुष्ट सकृत्प्रजाः । बलिभुग् वायसा अपि' इत्यमरः । निम्बः; निबि सेचने, निम्बति लोकानां

नाम्भोधिस्तृष्णामपोहति ॥१०९॥

वालुका अपि स्वगुणमाश्रयन्ते ॥११०॥

---

स्वास्थ्यम्। ततः पचाद्यच्। काकः। 'कै शब्दे, कायति। इण् भीका' इत्यादौणादिकसूत्रात् कन् ॥१०८॥

लोकतृष्णाविगमे वारिधेरपि सामर्थ्याभावमाह नेति। अम्भोधिर्वारिधिः सागर इति। लोकतृष्णां विषयवासनाम्। नापोहति न पूरयितुं शक्नोति नित्यवृद्धिस्वभावात्। तदुक्तं कविभिः—

'धनाशा जीवनाशा च जीर्य्यतोपि न जीर्य्यति'। इति।

वारिधिपक्षे तु पिपासायाः सततं वर्धमानत्वेन पुनः पुनः पिपासुत्वाज्जलधिस्तामपनेतुं न शक्नोति। पौराणिकास्तु 'आशा वैतरणी नदी' इत्याहुः। यथा जीवनावसाने वैतरणी नदी समुत्तीर्य्यते तद्वत् आशानद्यपि। सति जीवने आशानदी समुत्तरणे नास्ति सम्भवः। तात्त्विकैरुक्तम्—

'सा तृष्णा चेत्परित्यक्ता को दरिद्रः क ईश्वरः'।
'आशा हि परमं दुःखं नैराश्यं परमं सुखम्'।

अम्भोधिः। अभि शब्दे, अम्भो जलं धीयते इति। 'उदकेऽस्वर्भौ च' इत्यनेन असुन्, नुमागमश्च। 'वृट् लिप्सायामुदन्यायां स्मरपुत्र्यामपि स्त्रियाम्'। तृष्णा, ञितृष् पिपासायाम्, तर्षणं तृष्णा। "तृषिशुषिरसिभ्यः कित्" इत्यौणादिकात्नक् ॥१०९॥

क्षुद्रस्यापि स्वगुणत्यागाभावमाह वालुका इति। वालुकाः सिकताः। परस्परासंहता अपि स्वस्यात्मनो गुणं स्वाभाविक

## सन्तोऽसत्सु न रमन्ते ॥ १११ ॥

परस्परं संहतस्वभावाः पदार्थाः जल-तैल-क्षीरादयः तेषां कैव कथा पविभागे। खलः शुष्ककर्कशानामोद्वयो अवस्था च। स्निग्धास्तु सश्लेषण स्वभावाः। 'वालुका सिकतासु स्यात् वालुकम्लैलवालुकं' इति मेदिनी। वल प्राणने, सतो बाहुलकादुन्। स्वार्थे कन्। अथवा 'एला वालुकमैलेयः' इत्यनेन वालुका गन्धद्रव्यं विज्ञेयम्। किंवा वालुकापदेन गन्धयुक्तिरीत्या पुष्पसारादेर्मेलन' बोध्यम्। 'गुणः, त्यागे शौर्य्यादि सन्ध्यादि सत्त्वाद्यावृत्तिरज्जुषु' इति कोषः। गुण आमन्त्रणे, गुणयति। तत्र च घञ् प्रत्ययेन सिद्धम् ॥ ११० ॥

सतां सद्भिरेव सङ्गः श्रेयान् नासद्भिस्तदाह सन्त इति। असत्सु नीचपामरशठेषु ताहशविषयेषु वा। सन्तो विद्वांसः साधवो न रमन्ते नापि सम्मिलिता भवन्ति। तदाले सत्त्वात् प्रच्युतिः स्यात्। तथाचोक्तं हृद्वाक्ये—

'सद्भिरासीत सततं सद्भिः कुर्व्वीत सङ्गमम्।
नासद्भिः किञ्चिदाचरेत्' इत्युक्तं प्राक्। सङ्गमं सम्मेलनमित्यर्थः। 'न सतां मूर्खेषु रतिः' इत्थं पाठद्वैधे, अर्थावैषम्यम्। 'सभ्य-सज्जन-साधव' इति। कविनापि 'सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति' इत्युक्तम्। रमन्ते क्रीडन्ति ऐक्येन, कार्य्याणि साधयन्ति इति। पूर्व्वसूत्रमन्यत् ॥ १११ ॥

न हंसाः प्रेतवने रमन्ते ॥ ११२॥

अर्थार्थं प्रवर्त्तते लोकः ॥ ११३ ॥

इति नीतिदर्शनाख्ये चाणक्यसूत्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

अयोग्यस्थाने मेलन गमनादेर्निषेधमाह नेति। हंसाः सारसाः जालपादा इति। प्रेतवने मृतवने श्मशानारण्ये चेति। न रमन्ते नापि क्रीडन्ति विचरन्ति च। सद्विवेकाः साधवः। असत्सु हीनेषु न सज्जन्ते। यस्य तु यदनुद्वेगकरम् अनुकूलस्थानं स तत्रैव मिलति संगतश्च भवति, नान्यत्र। अदः सूत्रं पूर्व्वसूत्रस्य भावप्रकारव्यञ्जकम्। 'प्रेतो भूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः' इति मेदिनी। तद्विषये सूरिभिरुक्तं 'काकः पद्मवने रतिं न लभते हंसश्च कूपोदके' इति। 'हंसः स्यामानसौकसि' इति विश्व.। हन हिंसा गत्यो., हन्ति गच्छति। 'हु' तु यदि हनि' इत्यादिना स.। यद्वा अचिप्रत्यये 'भविहृणीगमाहंस' इत्यनेन सक्॥ ११२ ॥

धनादिप्रयोजनसाधनार्थं लोक प्रवृत्तिस्तदाह अर्थेति। अर्थार्थं धनार्थं लोको जन। प्रयोजनसम्पादनाय च। प्रवर्त्तते, लोक प्रवृत्तिर्व्यापार. जगति अथार्थं दृश्यते। तेन जागतिककार्य्य-निर्वाहः। द्विविधं हि लोकप्रवर्त्तनं कार्य्यं भवति। स्वार्थेन करुणया वा। अज्ञानान्तु तथैव प्रवृत्ति.। यत्र तु स्वार्थकरुणे नस्तो न तत्र प्रवृत्ति.। यथा मरुस्थल दर्शने। भारते च—

अहिंसा लक्षणो धर्मः ॥ ७० ॥

स्वशरीरमिव परशरीरं मन्यते साधुः ॥७१॥

---

'धर्म्मेण हि सहायेन तमस्तरति दुस्तरम्' इति । अधर्म्माच्च दुःखमनिवार्य्यम् । त्रिवर्गे धर्म्मानुष्ठानप्रसङ्गतो हि इदं सूत्रं नपौनरुक्त्यमावहति । पूर्व्वापर संक्षेपविस्तररूपिणोभयोरप्यपौन रुक्त्यादिति । प्राक् संक्षेपेणोक्ता सन्दर्भावसाने यथाविस्तररूपेणोक्तिः ॥ ६८ ॥

धर्म्मस्य सामान्यलक्षणमाह अहिंसेति । अहिंसा सर्व्वभूतेषु आत्मवज्ज्ञानम् । सैव लक्षणं स्वरूपपरिचायकं यस्य सः । सच धर्म्मो लोक-विधारकः । तथा च श्रुतिः 'मा हिंस्यात् सर्व्वा भूतानि' । 'स्वधिते मैनं हिंसि' इति । स्मृतिश्च 'अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः' इति योगदर्शने । अन्यच्च 'अहिंसा परमो धर्म्मः' । भूतोपद्रवतद्वधजनितेन धर्म्मेण नहि पापं व्यपोहति । एवमेव जैनैर्व्वौद्धैरप्युक्तम् । तथा च स्मृतिः—

'यथा पङ्केन पङ्काम्भः सुरयापि सुराकृतम् ।

भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति' ॥ इति ।

मनुनापि सामासिकधर्म्मलक्षणे वदुक्तम् । सुश्लोकधर्म्मलक्षणेन विश्वासः स्वधर्म्मे निष्ठा तद्बोधक शास्त्रे श्रद्धा च ज्ञेयेति ॥७०॥

साधोः स्वपरशरीराभेदव्यवहारमाह स्वेति । स्वशरीरमिव

## सर्व्वत्र मान्यं भ्रंशयति बालिशः ॥७२॥

---

स्वस्यात्मनः शरीरवत् परस्यान्यस्य जीवस्य शरीरं तद्गतसुखदुःखा-दिकञ्च समानं साधुर्महाजनो ज्ञानवांश्चेति मन्यते। समात्म-दर्शिनां साधूनां सर्व्वेश्वरबुद्ध्या विचरणात् स्वपरभेदाभावेन समज्ञानं जायते। तदुक्तं—

'आत्मौपम्येन सर्व्वत्र समं पश्यन्ति साधवः'। इति।

एतेन स्वदुःखमिव परदुःखं साधुः प्रत्येतीति सारः। तेन सङ्घर्ष-मपि प्रतिष्ठितं भवति। सामाजिकेषु मानसौमनस्यं परिवर्द्धते। एतद्विपक्षस्य गीतायामपि विगानमुक्तम्। तद्यथा—

'मामात्म-परदेहेषु प्रद्विषन्तोऽभ्यसूयकाः।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान्'॥ इति।

अन्यत् पूर्व्वमुक्तम् ॥ ७१ ॥

अज्ञस्य सर्व्वत्र गौरवज्ञानाभावमाह सर्व्वत्रेति। सर्व्वत्र सर्व्वस्मिन् विषये कर्म्मणि वा। बालिशः मूढोऽज्ञ इति। मान्यं माननीयं सम्मानार्हम्। जनं स्थानञ्चेति। भ्रंशयति विनाशयति अवजानाति च। मूढस्तु मानापमानज्ञानाभावात् स्वमिव पर-मप्यवजानाति। यथापथे गच्छन्तं गजं गोमायुरुपहसति। न प्राज्ञस्तादृक् करोति। परन्तु सर्व्वत्र मैत्र्यादि भावनायां लोकाः सुखिनो भवन्ति। श्रेष्ठेषु मैत्रीं दीनेषु करुणां गुरुषु मुदितां

## मांसभक्षणमयुक्तं सर्व्वेषाम् ॥ ७२ ॥

हीनेषूपेक्षामिति। नीतिविदस्तु चोरेषु दण्डः। शठेषु शाठ्यम्, श्रेष्ठेषु मानम्, दीनेषु दानमिति मन्यन्ते। 'मूर्खवैधेय-धाक्षिणाः' इत्यमरः। पूर्व्वमुक्तं यदनिरुक्तत्वादि। ७१ ॥

मांसभक्षण-निषेधमाह मांसेति। मांसस्य पलस्य यद् भक्षणमदनं तत् सर्व्वेषां लोकानामयुक्तमनुचितमवैधञ्चेति। यतः प्राणिनां द्रोहं विना क्वापि मांसं नोत्पद्यते। मीमांसकास्तु वैधमांसभक्षणे न दोषः इत्याहुः। तथा चोक्तं महर्षिणा—

'या वेदविहिता हिंसा नियतेऽस्मिन् चराचरे।

अहिंसामेव तां विद्धि वेदाद्धर्मो हि निर्बभौ' ॥

तदन्यत्र च स्मृतौ—

'नियुक्तस्तु यथा न्यायं यो मांसं नात्ति मानवः।

स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्' ॥ इति च।

अत्र नियुक्तः शास्त्रानुसारेण उद्युक्त इत्यर्थः।

अपरे तु सांख्य-योग-जैन-बौद्धा आहुः। मांसभक्षणं सर्व्वथाऽनुचितम्। यागादौ तु तज्जनित सुकृतिः पशुहननजनितं पापञ्च भवतीति। श्रुत्युक्त हिंसाबोधक-वाक्यानि यथा—'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः'। अन्यच्च 'वायव्यां श्वेतछागलमालभेत'। 'ज्योतिष्टोमे नवः पशवः'।—

'षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।

अश्वमेधस्य वचनादूनानि पशुभिस्त्रिभिः' ॥

## न संसार-भयं ज्ञानिनाम् ॥ ७४ ॥

इति गौड़पादभाष्योद्धृतम् । नियुक्तपदेन—

'देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दुष्यति' ।

इति बोध्यम् । सामिषादनतो निरामिषादनमायुर्वेदकं निरुपद्रवं नैरुज्यकरञ्च । ये तु निवृत्तिपथपरायणाः तेषां निरामिषादनं जीवहनन निषेधश्च महाफलदायकः । प्रवृत्तिमार्गगतानां मानवानां वैधहिंसा त्यागे उपायाभावः । अन्यत्सर्वमीसुधां मीमांसासन्दर्भे च प्रपञ्चितमस्ति । नेह प्रस्तूयतेऽनुपयोगित्वादिति ॥ ७३ ॥

ज्ञानिनां तत्त्वदर्शिनां संसारभीतिर्नास्तीत्याह नेति । ज्ञानिनां तत्त्वदर्शिनां संसार-विरागिनामिति । स्वादृष्टोपनिबद्ध-शरीर-परिग्रहः संसारः इति शाब्दिकाः । यस्मादियं भीतिस्तासां नास्ति लोभ-भोगादि परिहारात् । परमेश्वरानुग्रहे 'न बिभेति कुतश्चने'ति श्रुतिवाक्याच्च, कस्मादपि ते न बिभ्यति । हिंसापरिहाराच्च न कोपि क्वापि तान् हिनस्ति । तदुक्तं भारते—

'अभयं सर्वभूतेभ्यो दत्त्वा यश्चरते मुनिः ।
न तस्य सर्वभूतेभ्यः भयमुत्पद्यते क्वचित्' ।

श्रुतौ पुष्कलं प्रमाणमस्ति । अत्र संसारपदेन प्राण्युत्पत्ति तत्स्थिति तन्निधन तदन्तरा दुःखादिकं विशेषतो ज्ञेयम् । ज्ञानिनां देहे अहं ममाभिमानराहित्यात्तद्भयाभावः । संसारिणान्तु स्वपरभेदज्ञानप्राबल्यात् विषयासक्तत्वाच्च भयं विद्यते एव ॥ ७४ ॥

## विज्ञान-दीपेन संसारभयं निवर्त्तते ॥७५॥

---

विज्ञानशक्तेः प्राबल्यमाह विज्ञानेनेति। विज्ञानमेव दीपः आलोकाधारः तिमिरहारीति। विशेषज्ञानमेव विज्ञानं सांसारिकं सत्यज्ञानम्। यद्वा वस्तूनां परमसूक्ष्मज्ञानेन प्रतिभयाभिनयाविस्फारणं विज्ञानमिति प्रागुक्तम्। एतच्च शिक्षे शीलि-विषये च तेन संसारे सुखादि भोगप्राचुर्यम् परमार्थज्ञानरूप-विज्ञानेन च उत्पत्तिनिधन-शोक-तापादि दुःखनिवृत्तिर्भवति। तदुक्तं गीतायाम्—

'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्'॥

अन्यत्रैवोक्तं 'ज्ञान-दीपेन भास्वता' इति। 'विज्ञानं चार्मेर्ण ज्ञानम्' इति जैनाः। सम्मुग्ध-वस्तुज्ञानञ्च सामान्यज्ञानम्। विशिष्टवैशिष्ट्यावगाहिसूक्ष्मज्ञानं वा विज्ञानम्। कौर्मे च—

'चतुर्दशानां विद्यानां धारणं हि यथार्थतः।
विज्ञानमितरद्विद्या येन सत्यं विवर्द्धते'॥

बौद्धास्तु विज्ञानं द्विविधमाहुः। प्रवृत्तिविज्ञानम्, आलयविज्ञानञ्चेति। घटोऽयमित्यादिविज्ञानं तत्प्रवृत्तिविज्ञानम्। अहमहमित्याकारानुवृत्तिरालयविज्ञानम्। प्रकृते तु विज्ञानदीपेन सुप्रवृत्तेन बुद्धेरुत्कर्षेण स्फीत दीपालोकवत् सर्वस्थूल-सूक्ष्म सांसारिक-विषयकार्यदोषैस्तं तत्तत्काले निवर्त्तते॥ ७५॥

## सर्वमनित्यमध्रुवम् ॥ ७६ ॥

## स्वदेहे देहिनामतिमहती ॥ ७७ ॥

सांसारिक-विषयस्य नश्वरत्वमाह सर्वमिति। इह तु यद् यद् दृश्यते तत्सर्वं वस्तु जन्यत्वादनित्यम्। अतोऽध्रुवं विनाशि। नश्वरशीलम्। यथा घटपटादिकानां, जन्यपदार्थस्य नाश सम्भावना ध्रुवेति। सांसारिकं यद् यत्कार्य्यं, धनादिविषयश्च तत्तद्‌व्यवहारोऽपि तत्तत्कार्य्य-कालानुसारेण तादृश लोकाशयमनुसृत्य सम्यग्ज्ञात्वा मतिमता कार्य्यं सम्पाद्यमिति सारः। धर्मशास्त्रकृत आहुः—

'अनित्या बान्धवाः सर्वे सम्पदश्चैव चञ्चला।
शरीरिणां ध्रुवो मृत्युस्तस्माद्धर्ममनुस्मरेत्' ॥ इति।

'सर्वमनित्य'मिति सूत्रस्यपाठभेदाभावेऽपि अर्थकाठिन्याभावः। 'परमेशातिरिक्तं सर्वमनित्यमिति' वेदान्तिनः प्रोचुः। यत्यावसाने परमेशबुद्धि-समुत्थापनेन आरभ्य सूत्राणि उच्यन्ते। अध्रुवपदेन विषयविनाशस्यावश्यम्भाविता दर्शितेति सारः ॥ ७६ ॥

देहात्मबुद्धि-भावस्याह स्वदेह इति। देहिनां देहधारिणां जीवानाम्। स्वस्यात्मनो देहे। अति महती बुद्धिश्चिन्ता वा देहरक्षार्थं निरन्तरमुत्पद्यते। अत्र बुद्धिरित्यूह्यम्। यथा संसारयात्रानिर्वाहार्थं लोकानां बुद्धिर्बलवती भवति। ततोऽधिकं देहरक्षण-भरणार्थञ्च बुद्धेः प्राबल्यम्भवति। सा च साधारणलोकानां प्रबला दृश्यते। तदुक्तं सूरिभिः—

कृमिशकृन्मूत्रभाजनं शरीरं पुण्यपापजन्म-हेतुः ॥ ७८ ॥

---

'भोजनाच्छादने चिन्ता प्रबला प्राकृते जने ।
देहेऽधिका तथा तस्य दुर्बला मतिमप्सु सा' ॥ इति ।

'सदेहे देहिनां मतिर्महती'ति पाठः श्रेयान् स्यात् । ग्रन्थान्तरे सूत्रमिदं नोपलभ्यते । देहे स्थिते सर्वं विषयी कर्तुं प्रभवति, तदभावेऽन्यदस्तु मास्तु वेति देहस्थितिज्ञानं प्रबलं लोकेषु ॥७७॥

जीवदेहस्य पुण्यदुष्कृतोत्पत्तिहेतुत्वमाह कृमीति । कृमिः क्षुद्रकीटः । शकृत् पुरीषम् । मूत्रं प्रस्रावः । भाजनादावेतेषां द्वन्द्वः पश्चात् शरीरपदेन षष्ठीतत्पुरुषः । एतेषां कृम्यादीनाम् । शरीरं देहः । पुण्यं सुकृतिः । पापं दुःखाद्युत्पादहेतु-दुष्कृतम् । तयोर्जन्म उद्भवः । एतयोरपि शरीरं हेतुः कारणम् । यतः शरीरं विना तेषां कृम्यादीनां व्यापारासम्भवात् । तदुक्तं मैत्रायणीश्रुतौ 'शरीरमिदं मैथुनादेवोद्भूतं सम्भूत्युपेतं निरयेऽथ मूत्रद्वारेण निष्क्रान्तं .अस्थिभिश्चितं मांसेनानुलिप्तं चर्मणाव-बद्धम्' इति । व्यासभाष्येऽप्युक्तं—

'स्थानाद्बीजादुपष्टम्भान्निःस्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः' ॥ इति च ।

शीर्यते व्याध्यादिभिरिति शरीरम् । एकस्मिन् ग्रंथे शरीरान्तं सूत्रं विन्यस्य ततः पुण्यपापे एव जन्महेतू इति पृथक् सूत्रान्तरमङ्कित-

जन्ममरणादिषु दुःखमेव ॥ ७९ ॥

तपसा स्वर्गमवाप्नोति ॥ ८० ॥

---

मस्ति । तयोः पार्थक्येऽर्थोपलब्धौ विशेषशौकार्यं नास्तीत्यतः अनादृतपाठस्तदिति ॥ ७८ ॥

जीवस्य जन्मादिभिर्दुःखोत्पत्तिमाह जन्मेति जन्म प्राण्युत्पत्तिः तदुक्तं कौमुद्यां मिश्रैः 'निकायविशिष्टाभिरपूर्वदेहेन्द्रियबुद्धि-वेदनाभिः पुरुषस्य सम्बन्धो जन्म' इति । मरणं निधनं तत्तेषां संयोगविशेषहानम्, ते चोत्पत्तिनिधने आदिर्येषां रोग-शोक-ताप-बन्धन व्यसनानां तेषु । तेषु च मानवानां केवलं दुःखमेव क्लेश एव नतु सुखम् । यद् वैषयिकं सुखं तत्तिमिरे ज्योतिरिङ्गणालोकदर्शनवदिति वेदान्तिनः । प्रकृते तु महामतीनां विपुल-धने सत्त्वे तेन कालेऽस्मिन् अमितसुखमुत्पद्यते । यस्य तु इहलोके सुखलेशो नास्ति तस्यामुत्र सुखं कुत इति नीतिशरणाः । योगिभिरुक्तं 'दुःखबहुलः संसारो हेय.' इति । पद्निकायादिकं प्रागुक्तम् ॥ ७९ ॥

तपसः स्वर्गहेतुत्वमाह तपसेति । तपसा कृच्छ्रचान्द्रायणादिना द्वन्द्वसहनेन देवाराधनेन । स्वर्गं अमरधाम नित्य सुखविशेषञ्च । अवाप्नोति तत्फलेन लभते । तथा च श्रुतिः 'तपसा चीयते ब्रह्म' इति । स्मृतिश्च—

'बहवो ज्ञान तपसा पूता मद्भावमागताः' ।

क्षमायुक्तस्य तपो वर्द्धते ॥ ८१ ॥

---

'तपसा कल्मषं हन्ति' इति च। गीतायान्तत्तपस्त्रिविधमुक्तम्। मानस-शरीर-वाङ्मयभेदेन। तथा च—

'देव-द्विज गुरु-प्राज्ञ पूजनं शौचमार्जवम्।
ब्रह्मचर्य्यमहिंसा च शारीरन्तप उच्यते'॥
'अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत्।
स्वाध्यायाभ्यसनञ्चैव वाङ्मयन्तप उच्यते'॥
'मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भाव-संशुद्धिरित्येतत्तपो मानसमुच्यते'॥

अन्यत्तपोमाहात्म्यमुपनिषत्सु चास्ति। नेहोक्तं विस्तरभियेति। तप सन्तापे, तप्यते। औणादिकासुन्नादसुन् ॥ ८० ॥

तितिक्षासाधनस्य फलमाह क्षमेति। क्षमा क्षान्तिः क्लेश-सहनम्। तया युक्तस्य सहतः पुंसः। तपो वर्द्धते। तेन साधनेन सह वृद्धिं यास्यति। परेणापकृते तस्यापकाराकरणं क्षमेति प्रागुक्तम्। तथा च क्षमालक्षणं प्रोवाच बृहस्पतिः—

'बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता'॥

सा च मात्स्ये—

'आक्रुष्टोऽभिहतो यस्तु न हन्यान्नाक्रोशेदपि।
अदुष्टैर्वाङ्मनः कार्यैस्तितिक्षा च क्षमा स्मृता'॥

तस्मात् सर्व्वेषां कार्य्यसिद्धिरिति ॥ ८२ ॥

---

'विभागशीलः सततं क्षमायुक्तोदयात्मकः।
क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः।
गृहस्थस्तु क्षमायुक्तः न गृहेण गृही भवेत्' ॥ इति

गारुड़े च—

'एकः क्षमावतां दोषो द्वितीयो नोपपद्यते।
यदेनं क्षमयायुक्तमशक्तं मन्यते जनः' ॥ इति।

प्रसङ्गादत्र पुनरुच्यते—

'क्षमा तितिक्षा पृथ्वी च योग्ये शक्ते हितं क्षमम्'।
इति धरणि.। पदविकृत्यादि प्रागुक्तम् ॥ ८१ ॥

कार्य्यसिद्धेः कारणमाह तस्मादिति। तस्मादशेषक्लेशसहन-शीलत्वात्। सर्व्वेषां जनानाम्। यस्मिन् संसारे कार्य्याणां सिद्धिः निष्पत्तिर्भवति। यद्वा ग्रन्थेऽस्मिन् तस्मादादितः सकल-नीति-सारोपदेशाचियगंकथनाच्च। एतानुपदेशाननुसृत्य ये कार्य्यं कुर्वन्ति तेषां सर्व्वेषां कार्य्यमवश्यं निष्पद्यते। अत्र सिद्धिपदो-पादानाद् ग्रन्थकृताऽन्त्यमङ्गलं सूचितम्। इत. परं केचन विषयाः सन्ति आदर्शग्रन्थान्तरोक्ता, ते चात्रोपयोगित्वेनावसाने ग्रस्य चोद्धृत्य व्याख्यायन्ते ॥ ८२ ॥

कार्म्मारम्भोपायः पुरुष द्रव्यसम्पद् देश-काल-
विभागो विनीपातप्रतीकारः कार्य्यसिद्धिश्च ॥८३॥

इति नीतिदर्पणनामके चाणक्यसूत्रे षष्ठोऽध्यायः ॥ ६ ॥



सर्वकार्य्यसाधनोपायनिर्देशमाह कार्म्मेति। कर्म्मणो य आरम्भः कार्य्य-सूचनं प्रायमिकानुष्ठानम्। तस्योपायः। निर्व्वाधेन तद् योग्य-सामग्रासादनम्। तदुपयोगि पूर्व्वचिन्तनञ्च। पुरुषाणां सम्यग्योग्यानां तत्कार्य्यसम्पादकानां, यत्र यत्र कार्य्यसम्पादने यानि यानि द्रव्याणि योग्यत्वेनाभिमतानि तेषां सम्पत् सम्पत्तिः अव्याहत-सम्भारश्च। देशादि। देशः कार्य्यनिष्पादनोपयुक्त-स्थानम्। यथा गोस्तनी-श्वेतदाडिमी-समुत्पादने गान्धारदेशः नतु विहारदेशः। कालः पूर्व्वाह्णादिः तत्कार्य्ययोग्यः समयश्च। यथा शीतकाले इक्षुदण्डरोपणं नतु वर्षायाम्। यद्वा तारुण्ये व्यायामः नतु वार्द्धक्ये। विनीपातेति। विनिपातस्यापदः, प्रतीकारः उपशमश्चिन्तनीयः। ऐतैर्नियमैः कार्य्याणां सिद्धिर्भुवा भवति। सर्वमेतद्ग्रन्थतोऽनुसन्धेयम्। अन्यच्च अर्थशास्त्रे चास्ति। कार्म्मारम्भोपायादिभिर्मन्त्रे पञ्चाङ्गमिष्टेनेन नीतिवाक्यामृते सोमदेवैः उच्यत इति ॥ ८३ ॥

विहितेषु तदन्येषु मनो-वाक्-काय कर्म्मभिः ।
प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम् ॥ १ ॥

प्राग् मन्त्राङ्गशक्तियुक्ता दाचिरप्रशंसामाह विहितेष्विति।

सतां मनो वाक् कायकर्मभिः चित्तवाक्य-शरीर क्रियाभिः । विहितेषु शास्त्रोपदिष्टेषु कार्य्येषु । तदन्येषु अविहितेषु अनुपदिष्टेषु अवैधकर्मसु च । प्रवृत्तौ वा इष्टसाधनताज्ञानजनितबुद्धौ । सामान्यप्रवृत्तौ च । निवृत्तौ द्विष्टसाधनताज्ञानजनित बुद्धौ अवगमया कार्य्यनिवृत्तौ च । आर्जवं सारल्यमौदार्य्यञ्च । ऐकरूप्यं नतु सत्यासत्ययुक्तम् । कौशलेन नानारूपत्वं वा । तदुक्तं 'चित्ते वाचि क्रियायाञ्च महतामेकरूपते'ति । सूत्रिवर्य्येण चाणक्येन अर्थशास्त्रे नीतिविषयाः सुचतुधा प्रौढ़-रीत्या प्रपञ्चिताः । अत्र सूत्रात्मकग्रन्थे लघुतया अल्पमतीनामवबोधाय ते विषया गुम्फिताः ॥ १ ॥

अश्वा नागाः स्यन्दनानाञ्च सङ्घाः,
मन्त्राः गुप्ता दैवतस्यानुकूलम् ।
एतान्याहुः साधनानि　　ज्ञाम्,
तेभ्योऽपीयं बुद्धिरुत्कृष्यते मे ॥ २ ॥

सम्प्रति महामनीषिणो　　भुः कौटिल्यस्य सन्दर्भपरिशेषे प्रतिभाश्चर्य्य-परिचयमुपसंहरन्नाह अश्वा इति । अश्वाः घोटकाः । आरोहणशकटसमरादावुपयुक्ताः । नागाः कुञ्जरा वारणाः तत्तत्कार्य्ये योग्याः । स्यन्दनानां सङ्घाः । रथ-शकटिबलसमूहाः । मन्त्राः गुप्ताः गुप्तमन्त्राः गूढ़प्रविधानेन रहस्ये सम्मन्त्रिभिर्विचारिताः । दैवतस्य दैवम् । अनुकूलं शुभसूचकम् । कस्मिन्नपि कार्य्ये दैवविघ्नाभावात् तत्साधने नीतिनिपुणाः ।

एतानि राज्ञां नरेन्द्राणां राष्ट्रपालने साधनानि उपायभूतानि आहुः प्रोचुः । यतश्च—

'हस्तिघोटकसामन्त नौकादिभिर्दृढैश्च साधनैः ।
राजा भवति लोकेऽस्मिन् न पुनर्वाक्यमात्रतः' ॥ इति ।

तेभ्यः साधनेभ्यो मे मम बुद्धिर्मनीषा । उत्कृष्यते श्रेष्ठा भवतीति । यतो शरीरोपाय बलाद्विज्ञानबलं श्रेयः । विज्ञानन्तु पदार्थचिन्तालोचनादिभिः विद्या मतिभया चोत्पद्यते । श्लोकोऽयं रविनर्त्तकविरचिते चाणक्यशतकेऽपि दृश्यते । नवनन्दकुलापमाना-सहिष्णोर्मनोपि-कौटिल्यस्योक्तिरियम् । नवनन्दभोजनशालानिर्गत्यानेन महामतिना तेनाक्षपरिचयो दत्तः । रविनर्त्तकस्य चाणक्यकथायामन्यदस्ति । नवनन्दास्तु न्यायान्यायविवेकहीनाः समुद्धतास्तथा आसन् ॥ २ ॥

बुद्धिरेव जयत्येका पुंसः सर्व्वार्थसाधनी ।
यद्बलादेव किं किं न चक्रे चाणक्य-भूसुरः ॥ ३ ॥

परिशेषे साधनसामग्रीतो वात्स्यायनापरनाम्नः चाणक्यस्य बुद्धेः श्रैष्ठ्यमाह्वानेन । बुद्धिरिति । बुद्धिरेव जयत्येका पुंसः मानवस्य । सर्वार्थसाधनी । सर्व्वेषामैहिक-पारत्रिककार्य्याणां सम्पादनकारिणी सती एका अद्वितीया । जयति सर्व्वश्रेष्ठत्वेन वर्त्तते । यद्बलाद् यस्यास्तादृश्या बुद्धेः बलात्सामर्थ्यात् । चाणक्य-भूसुरः चाणक्यनाम्ना विमलमतिः भूदेवः । किं किं कार्य्यं न चक्रे न कृतवान् । अपि सर्व्वमेव राज्यविध्वंसनं ।

महासमरम् । विपुलनीतिप्रसारणादिकञ्चेति ।। तदुक्तम् अर्थ-शास्त्रपरिशेषे—

> 'येन शास्त्रञ्च शस्त्रञ्च नन्दराजगता च भूः ।
> अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम्' ॥

हितोपदेशे विग्रहप्रकरणे च—

> 'नन्दं जघान चाणक्यस्तीक्ष्णदूत-प्रयोगतः ।
> तद्दूरान्तरितं दूतं पश्येद् धीरसमन्वितः' ॥

विष्णुगुप्तः चाणक्यः चणकात्मजः वात्स्यायनः, मल्लनागः, द्रामिलः, अङ्गुलः, पक्षिलस्वामी, कौटिल्यः—इत्येतानि नामानि भोजराजीय नाम मालायाम्, हैम कोषे, यादवीयवैजन्त्याञ्च उपलभ्यन्ते । श्लोकोऽयं चाणक्यकथायामपि वर्त्तते । कार्य्य-सम्पादने बहिः साधनानि बहूनि । अन्तःसाधनं बुद्धिरेकैव । सात्वस्यत्वापेक्षते ।

> 'मूलसूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम् ।
> यस्य विज्ञानमात्रेण मूर्खो भवति पण्डितः' ॥
> 'नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ।
> सर्वबीजमिदं शास्त्रं (सूत्रं) चाणक्यं सारसंग्रहम्' ॥ इति च

लघुचाणक्यप्रारम्भश्लोकाच्चाणक्यसूत्रमिदं न शङ्काभूमिं यातीति । अन्यस्तोत्रमर्थशास्त्रावसाने । 'स्वयमेव विष्णुगुप्तश्चकार सूत्रं भाष्यञ्चेति' । एतदेव सूत्रम्, भाष्यं तत्रार्थशास्त्रमिति ॥ २ ॥

> चाणक्य-माणिक्य-महार्घ्यसूत्रम्,
> न्यायाकराब्धमिदं हितार्थम् ।

आलोकतत्त्वं मतिजाड्यहारकम्,
बुधैः सुहृद्भिर्हृदयेषु धार्य्यम् ॥ १ ॥
न योग्यमुक्तं क्वापि प्रयुक्तं यच्च कुत्रचित् ।
क्वाऽप्यशुद्धं भ्रमाज्जातं क्षन्तव्यन्तद्विदाम्वरैः ॥ २ ॥

शाकेऽन्तरिक्ष शरनागसुधांशुमाने,
पक्षे सुधाकरयुते तिथि-पूर्णिमायाम् ।
कौटिल्यसूत्रनिचये विमला टीकेयम्,
आद्या सुधीन्द्रनिकरैः कृपया सुधीभिः ॥ ३ ॥

पूर्वबङ्गाब्धि-पूर्वस्मिन् चन्द्रनाथाद्रि-दक्षिणे ।
चट्ग्राम (+) समासन्ने 'बारका' विषये मम ॥ ४ ॥
शाण्डिल्यः सामगो विप्रः षड्दर्शनसुसेवकः ।
धीरेशरामकान्तस्य ज्योतिःशास्त्रविदोऽङ्गजः ॥ ५ ॥
नौमि नौकर्णधारस्य चाणक्यस्य महामतेः ।
तत्सूत्रनिकरे चेयं टीका सारार्थबोधिनी ॥ ६ ॥

इति दर्शनभूतचाणक्यसूत्रव्याख्यायां श्रीईश्वरचन्द्रशर्मशास्त्रि-
कृतायां सारार्थबोधिन्यां षष्ठोऽध्यायः ॥ ६ ॥

—०*०—

समाप्तश्चायं ग्रन्थः ।

---

(+) CHITTA GANG.

| सूत्राणि, | प्रथमाध्याये | पृष्ठे |
|---|---|---|
| ४२। न तीर्थं प्रतिपादयति। | ... | ३१ |
| ४३। अलब्धलाभादिचतुष्टयं राज्यतन्त्रम्। | ... | ३२ |
| ४४। राज्यतन्त्रायत्तं नीतिशास्त्रम्। | ... | ३३ |
| ४५। राज्यतन्त्रेष्वायत्तौ तन्त्रावापौ। | ... | ३४ |
| ४६। तन्त्रं स्वविषये कृत्येष्वायत्तम्। | ... | ३४ |
| ४७। आवापो मण्डले सन्निविष्टः। | .. | ३५ |
| ४८। सन्धिविग्रहयोर्योनिर्मण्डलम्। | ... | ३६ |
| ४९। नीतिशास्त्रानुगो राजा। | ... | ३७ |
| ५०। अनन्तर प्रकृतिः शत्रुः। | ... | ३८ |
| ५१। एकान्तरितं मित्रमिष्यते। | ... | ३९ |
| ५२। हेतुतः शत्रुमित्रे भविष्यतः। | ... | ४० |
| ५३। हीयमानेन न सन्धिं कुर्व्वीत। | ... | ४० |
| ५४। तेजो हि सन्धानहेतुस्तदर्थिनाम्। | ... | ४१ |
| ५५। नातप्तलौहं लोहेन सन्धत्ते। | ... | ४२ |
| ५६। बलवान् हीनेन विगृह्णीयात्। | ... | ४३ |
| ५७। न ज्यायसा समेन वा। | .. | ४३ |
| ५८। हस्तिनः पादयुद्धमिव बलवद्विग्रहः। | ... | ४४ |
| ५९। आमपात्रं आमेन सह विनश्यति। | ... | ४४ |
| ६०। अरिप्रयत्नमभिसमीक्ष्यात्मरक्षया वसेत्। | · | ४५ |
| ६१। शक्तिहीनो बलवन्तमाश्रयेत्। | ... | ४५ |
| ६२। दुर्बलाश्रयो हि दुःखमावहति। | ... | ४६ |
| ६३। अग्निवद्राजानमाश्रयेत्। | ... | ४७ |
| ६४। राज्ञः प्रतिकूलं नाचरेत्। | .. | ४७ |

| | सूत्राणि, प्रथमाध्याये | पृष्ठे |
|---|---|---|
| ८८ । | दण्डेन प्रणीयते वृत्तिः । | ६२ |
| ८९ । | वृत्तिमूलोऽर्थलाभः । | ६२ |
| ९० । | अर्थमूलौ धर्मकामौ । | ६३ |
| ९१ । | अर्थमूलं कार्य्यम् । | ६४ |
| ९२ । | यदल्पप्रयत्नात् कार्य्यसिद्धिर्भवति स उपायः । | ६४ |
| ९३ । | उपायपूर्वं कार्य्यं न दुष्करं स्यात् । | ६५ |
| ९४ । | अनुपायपूर्वं कार्य्यं कृतमपि विनश्यति । | ६५ |
| ९५ । | कार्य्यार्थिनामुपाय एव सहायः । | ६६ |
| ९६ । | कार्य्यं पुरुषकारेण लक्ष्यं सम्पद्यते । | ६६ |
| ९७ । | पुरुषकारमनुवर्त्तते दैवम् । | ६७ |
| ९८ । | दैवं विना अतिप्रयत्नं करोति यत्तद्विफलम् । | ६८ |
| ९९ । | मनोऽवमानस्य वृत्तिर्न सम्पद्यते । | ६९ |
| १०० । | पूर्वं निश्चित्य पश्चात् कार्य्यमारभेत । | ६९ |


## द्वितीयाध्याये—


| | | |
|---|---|---|
| १ । | कार्य्यान्तरे दीर्घसूत्रता न कर्त्तव्या । | ७० |
| २ । | न चलितचित्तस्य कार्य्यावाप्तिः । | ७० |
| ३ । | हस्तगतावमानात् कार्य्यव्यतिक्रमो भवति । | ७१ |
| ४ । | दोषवर्जितानि कार्य्याणि दुर्लभानि । | ७१ |
| ५ । | दुरनुबन्धं कार्य्यं नारभेत । | ७२ |
| ६ । | देशकालविद् कार्य्यं साधयति । | ७२ |
| ७ । | कालातिक्रमात् काल एव तत्फलं पिबति । | ७२ |

| | सूत्राणि, | द्वितीयाध्याये | पृष्ठे |
|---|---|---|---|
| ३१। | यः कार्यं न पश्यति सोऽन्धः। | ... | ८९ |
| ३२। | प्रत्यक्षपरोक्षानुमानैः कार्याणि परीक्षेत। | ... | ८९ |
| ३३। | न परीक्ष्यकारिणां कार्यविपत्तिः। | ... | ९० |
| ३४। | परीक्ष्य तार्या विपत्तिः। | ... | ९० |
| ३५। | स्वशक्तिं ज्ञात्वा कार्यमारभेत। | ... | ९१ |
| ३६। | यः स्वजनं तर्पयित्वा शेषं भुङ्क्ते सोऽमृतभोजी। | | ९१ |
| ३७। | कार्यानुष्ठानादायमुखानि वर्द्धन्ते। | ... | ९२ |
| ३८। | नातिभीरोः कार्यचिन्ता। | ... | ९३ |
| ३९। | स्वामिनः शीलं विज्ञाय कार्यं साधयेत्। | ... | ९३ |
| ४०। | धेनोः क्षीरं शीलज्ञो भुङ्क्ते। | ... | ९४ |
| ४१। | क्षुद्रे गुह्यप्रकाशनमात्मवता न क्रियते। | ... | ९४ |
| ४२। | आश्रितैरप्यवमन्यते मृदुस्वभावः। | ... | ९५ |
| ४३। | तीक्ष्णदण्डः सर्वैरुद्वेजनीयो भवति। | ... | ९६ |
| ४४। | ततो यथार्हं दण्डः स्यात्। | | ९७ |
| ४५। | भारं महाजनः समर्थः वोढुं न। | ... | ९८ |
| ४६। | अतिभारः पुरुषमवसादयति। | ... | ९९ |
| ४७। | यः संसदि परदोषं वक्ति स स्वदोषबहुत्वं प्रख्यापयति। | | ९९ |
| ४८। | आत्मानमेव पीडयत्यनात्मवतां कोपः। | ... | १०० |
| ४९। | नास्त्यप्राप्यं सत्त्ववताम्। | ... | १०१ |
| ५०। | साहसे खलु श्रीर्वसति। | ... | १०१ |
| ५१। | व्यसनार्त्तो विस्मरत्यप्रवेशेन। | ... | १०२ |
| ५२। | नास्त्यनन्तरायः कालक्षेपः। | ... | १०३ |
| ५३। | असंशयविनाशात् संशयविनाशः श्रेयान्। | ... | १०३ |

| सूत्राणि, | द्वितीयाध्याये | पृष्ठे |
|---|---|---|
| ५४। अपरधनानपेक्ष केवलमर्थदानं श्रेय । | | १०४ |
| ५५। न्यायगतोऽर्थः । | | १०५ |
| ५६। तद्विपरीतोऽर्थाभास । | | १०५ |
| ५७। यो धर्म्मार्थौ न पीडयति स काम । | | १०६ |
| ५८। तद्विपरीत कामाभास । | | १०७ |
| ५९। ऋजुस्वभाव परिजनो दुर्लभ । | | १०८ |
| ६०। अवमानागतमैश्वर्य्यमवमन्यत साधु । | | १०९ |
| ६१। बहूनपि गुणानेको दोषो ग्रसते। | | १०९ |
| ६२। महता साध्य न परत्र कर्त्तव्यम्। | | ११० |
| ६३। कदाचिदपि चारित्र न लङ्घयेत्। | | ११० |
| ६४। न क्षुधार्त्तोऽपि सिंहस्तृणञ्चरति। | | १११ |
| ६५। प्राणादपि प्रत्ययो रक्षितव्य । | | १११ |
| ६६। पिशुन श्रोता पुत्रदारैरपि त्यज्यते। | | १११ |
| ६७। बालादप्यर्थजातं शृणुयात्। | | ११२ |
| ६८। सत्यमप्यश्रद्धेय न वदेत्। | | ११३ |
| ६९। नाल्पमिच्छता भूतमवन्यत। | | ११४ |
| ७०। विपश्चित्स्वपि सुलभा दोषा । | | ११५ |
| ७१। नास्ति रत्नमखण्डितम्। | | ११६ |
| ७२। मर्य्यादाभेदकं न कदाचिदपि विश्वसेत्। | | ११६ |
| ७३। अप्रियेण कृतं प्रियमपि द्वेष्यं भवति। | | ११७ |
| ७४। नमयापि तुलाकोटि कूपोदकक्षयं करोति। | | ११७ |
| ७५। सतां मतिं नातिक्रमेत्। | | ११८ |
| ७६। गुणवन्तमाश्रित्य निर्गुणोऽपि गुणी भवति। | | ११९ |

| | सूत्राणि, | द्वितीयाध्याये | पृष्ठे |
|---|---|---|---|
| ७७। | चौराश्रितमुदकं चौरमेव भवति। | ... | ११९ |
| ७८। | मल्लिपत्रोऽपि पाटलि गन्धमुत्पादयति। | ... | १२० |
| ७९। | रजतमपि कनकसम्पर्कात् कनकमेव भवति। | | १२१ |
| ८०। | उपकर्त्तर्य्यपकर्त्तुमिच्छत्यबुधः। | | १२१ |
| ८१। | तद्विपरीतो बुधः। | | १२२ |
| ८२। | न पापकर्म्मणां संक्रोशभयम्। | ... | १२२ |
| ८३। | उत्साहवतां शत्रवोऽपि वशीभवन्ति। | .. | १२३ |
| ८४। | विक्रमधना राजानः। | .. | १२४ |
| ८५। | नास्त्यलसस्यैहिकामुष्मिकम्। | .. | १२४ |
| ८६। | निरुत्साहो दैवं परिशपति। | | १२५ |
| ८७। | मत्स्यार्थीव जलमुपयुज्यार्थं गृह्णीयात् | . | १२५ |
| ८८। | अविश्वस्तेषु विश्वासो न कर्त्तव्यः। | ... | १२६ |
| ८९। | विषं विषमेव सर्व्वकालम्। | | १२६ |
| ९०। | अर्थसमादाने वैरिणां संसर्गो न कर्त्तव्यः। | ... | १२७ |
| ९१। | आर्थ्यार्थमेव नीचस्य सम्बन्धः। | ... | १२७ |
| ९२। | अर्थसिद्धौ वैरिणं न विश्वसेत्। | .. | १२८ |
| ९३। | अर्थाधीन एव नियतसम्बन्धः। | . | १२८ |
| ९४। | शत्रोरपि सुतः सखा रक्षितव्यः। | .. | १२९ |
| ९५। | यावच्छत्रोश्छिद्रं पश्यति तावद्धस्तेन स्कन्धेन वा वाह्यः। | | १३० |
| ९६। | आत्मच्छिद्रं न प्रकाशयेत्। | | १३१ |
| ९७। | शत्रुं छिद्रे परिहरेत्। | ... | १३१ |
| ९८। | छिद्रे प्रहारिणो हि शत्रवः। | ... | १३२ |
| ९९। | हस्तगतमपि शत्रुं न विश्वसेत्। | .. | १३२ |

| | सूत्राणि, द्वितीयाध्याये | पृष्ठे |
|---|---|---|
| १००। | स्वजनस्य दुर्वृत्तं निवारयेत्। ... | १२२ |
| १०१। | स्वजनावमानो हि मनस्विनां दुःखमावहति। | १२२ |
| १०२। | एकाङ्गदोषः पुरुषमवसादयति। ... | १२४ |
| १०३। | शत्रुं जयति सुवृत्तः। ... | १२४ |
| १०४। | निकृतिप्रिया नीचाः। ... | १२५ |
| १०५। | नीचस्य मतिर्न दातव्या। ... | १२५ |
| १०६। | नीचेषु विश्वासो न कर्त्तव्यः। ... | १२६ |
| १०७। | सुपूजितोऽपि बाधत दुर्जनः। ... | १२७ |
| १०८। | शिरसि सह्यमानोऽप्यग्निर्दहत्येव। ... | १२७ |
| १०९। | किञ्चिदपि पुरुषं नावमन्येत। ... | १२८ |
| ११०। | क्षन्तव्य इति पुरुषान् न बाधयेत्। ... | १२८ |
| १११। | चन्दनादपि जातो वह्निर्दहत्येव। ... | १२९ |
| ११२। | भर्त्राधिकं रहस्युक्तं वक्तुमिच्छन्त्यबुद्धयः। ... | १२९ |
| ११३। | अनुरागस्तु फलेन सूच्यते। ... | १३० |
| ११४। | आज्ञाफलमैश्वर्य्यम्। ... | १३० |
| ११५। | दातव्यमिति बालिशः परिक्लेशेन दास्यति। | १३१ |
| ११६। | महदैश्वर्य्यं प्राप्याप्यधृतिमान् विनश्यति। ... | १३२ |


---

## तृतीयाध्याये—


| | | |
|---|---|---|
| १। | धृत्या जयति-रोगान् ... | १३२ |
| २। | नास्त्यधृतेरैहिकामुष्मिकम्। ... | १३२ |
| ३। | गुणवानपि चतुष्पदस्त्यज्यते। ... | १३३ |

| सूत्राणि, | तृतीयाध्याये | पृष्ठे |
| --- | --- | --- |
| ४। न दुर्जनैः सह संसर्गः कर्त्तव्यः। | ... | १४५ |
| ५। शौण्डहस्तगतं पयोऽप्यवमन्येत। | ... | १४५ |
| ६। कार्य्यसङ्कटेष्वर्थव्यवसायिनो बुद्धिः। | ... | १४६ |
| ७। मितभोजनं स्वास्थ्यम्। | ... | १४७ |
| ८। भक्ष्यमप्यपथ्यं नाश्नीयात्। | ... | १४७ |
| ९। जीर्णे भोजिनं व्याधिर्नोपसर्पति। | ... | १४८ |
| १०। अजीर्णे भोजनं विषम्। | ... | १४९ |
| ११। शरीरे वर्द्धमानो व्याधिर्नोपेक्ष्यते। | ... | १५० |
| १२। अल्पोऽपि विक्रियते व्याधिः। | ... | १५१ |
| १३। दानं निधानमनुगामि। | ... | १५१ |
| १४। पटुतरे तृष्णापरे सुलभमतिसन्धानम्। | .. | १५२ |
| १५। तृष्णया मतिश्छाद्यते। | ... | १५३ |
| १६। कार्य्यबहुत्वे बहुफलमायतिकं वा कुर्य्यात्। | .. | १५३ |
| १७। स्वयमेवावस्कन्नं कार्य्यं निरीक्षेत। | ... | १५४ |
| १८। मूर्खेषु साहसं नियतम्। | ... | १५४ |
| १९। मूर्खेषु विवादो न कर्त्तव्यः। | ... | १५५ |
| २०। मूर्खेषु मूर्खवत् कथयेत्। | ... | १५५ |
| २१। आयसैरायसमच्छेद्य। | - | १५६ |
| २२। नास्त्यधीमतः सखा। | ... | १५६ |
| २३। धर्म्मेण धार्य्यते लोकः। | — | १५७ |
| २४। प्रेतमपि धर्म्माधर्म्मावनुगच्छतः। | ... | १५८ |
| २५। दया धर्म्मस्य जन्मभूमिः। | — | १५९ |
| २६। धर्म्ममूलं सत्यदानं। | — | |

| सूत्राणि, | तृतीयाध्याये | पृष्ठे |
|---|---|---|
| २७। धर्म्मेण जयति लोकान् | — | १६० |
| २८। मृत्योरपि धार्म्मिकं रक्षति। | — | १६१ |
| २९। धर्म्माद्विपरीतं पापं। | | १६१ |
| ३०। यत्र यत्र प्रसज्यते तत्र तत्र प्रभुता ख्याति। | | १६२ |
| ३१। महतो प्रसज्येत। | | १६३ |
| ३२। लोके प्रशस्तः स मतिमान्। | | १६३ |
| ३३। सज्जनगर्हिते न प्रसज्येत। | | १६४ |
| ३४। उपस्थित विनाशः प्रकृत्याकारेण कार्य्येण लक्ष्यते। | | १६४ |
| ३५। आत्म विनाशं सूचयत्यधर्म्मबुद्धिः। | | १६५ |
| ३६। नास्ति पिशुनवादिनो रहस्यम्। | | १६५ |
| ३७। पररहस्यं नैव श्रोतव्यम्। | | १६६ |
| ३८। वल्लभस्य कारकत्वमधर्म्मयुक्तम्। | | १६७ |
| ३९। स्वजनेष्वति कामो न कर्त्तव्यः। | | १६७ |
| ४०। मातापि दुष्टा त्यक्तव्या। | | १६८ |
| ४१। स्वहस्तोऽपि विषदिग्धश्छेद्यः। | | १६९ |
| ४२। परोऽपि च हितो बन्धुः। | | १६९ |
| ४३। कक्षादप्यौषधं गृह्यते। | | १७० |
| ४४। नास्ति चोरेषु विश्वासः। | | १७१ |
| ४५। अप्रतीकारेषु व्यसनेषु अनादरो न कर्त्तव्यः। | | १७१ |
| ४६। व्यसनं मना बाधते। | | १७२ |
| ४७। अजरामरवदर्थमार्जयेत्। | | १७३ |
| ४८। अर्थवान् सर्व्वलोकस्य बहुमतः। | | १७३ |
| ४९। महेन्द्रमप्यर्थहीनमवमन्यते लोकः। | | १७४ |

| सूत्राणि, | तृतीयाध्याये | पृष्ठे |
|---|---|---|
| ५०। विरूपोऽप्यर्थवान् सुरूपः। | ... | १७५ |
| ५१। अदातारमप्यर्थवन्तमर्थिनो न त्यजन्ति। | ... | १७५ |
| ५२। अकुलीनोऽपि अर्थवान् कुलीनाद्विशिष्टः। | ... | १७६ |
| ५३। दारिद्र्यं खलु पुरुषस्य जीवितमरणम्। | ... | १७७ |
| ५४। कस्यचिदर्थं स्वमिव मन्यते साधुः। | ... | १७८ |
| ५५। परविभवेष्वादरो नैव कर्त्तव्यः। | ... | १७८ |
| ५६। परविभवादरो विनाशमूलम्। | ... | १७९ |
| ५७। पलालमपि परद्रव्यं न हर्त्तव्यम्। | ... | १७९ |
| ५८। परद्रव्यापहरणमात्मद्रव्यविनाशहेतुः। | ... | १८० |
| ५९। न चौर्य्यात् परं मृत्युपाशः। | ... | १८० |
| ६०। यवागूरपि प्राणधारणं करोति काले। | ... | १८१ |
| ६१। न कालेन मृतस्यौषधं प्रयोजनम्। | ... | १८२ |
| ६२। समकाले स्वयमपि प्रभुत्वस्य प्रयोजनम्भवति। | | १८३ |
| ६३। नीचस्य विद्या पापकर्म्मणा योजयति। | ... | १८४ |
| ६४। [illegible] | ... | १८५ |
| ६५। प्रकृतिर्नियता क्षुद्बाधा। | ... | १८५ |
| ६६। नहि धान्य-समोऽर्थः। | ... | १८६ |
| ६७। न क्षुधासमः शत्रुः। | .. | १८६ |
| ६८। नास्त्यभक्ष्यं क्षुधितस्य। | ... | १८७ |
| ६९। इन्द्रियाणि जरावशं कुर्व्वन्ति। | ... | १८८ |
| ७०। सानुक्रोशं भर्त्तारमाजीवेत्। | ... | १८९ |
| ७१। लुब्धसेवी पावकेच्छया खद्योतं धमति। | ... | १८९ |
| ७२। विशेषज्ञं स्वामिनमाश्रयेत्। | ... | १९० |

| सूत्राणि, | चतुर्थाध्याये | पृष्ठे |
|---|---|---|
| ७३ । | स्त्रीणाममैथुनं जरा । | १९१ |
| ७४ । | पुरुषस्य मैथुनम् । | १९१ |
| ७५ । | न नीचोत्तमयोर्विवाहः । | १९२ |
| ७६ । | अगम्यागमनादायुर्यशः पुण्यानि क्षीयन्ते । | १९३ |
| ७७ । | नास्त्यहङ्कारसमः शत्रुः । | १९४ |
| ७८ । | संसदि शत्रुं न परिक्रोशेत् । | १९४ |
| ७९ । | शत्रुव्यसनं श्रवणसुखम् । | १९५ |


## चतुर्थाध्याये—


| | | |
|---|---|---|
| १ । | अधनस्य बुद्धिर्न विद्यते । | १९६ |
| २ । | हितमप्यधनस्य वाक्यं न शृणोति । | १९६ |
| ३ । | अधनः स्वभार्यया अवमन्यते । | १९७ |
| ४ । | पुष्पहीनं सहकारमपि नोपासते । | १९८ |
| ५ । | विद्याधनमधनानाम् । | १९९ |
| ६ । | विद्या चौरैरपि न ग्राह्या । | २०० |
| ७ । | विद्यया ख्यातिः । | २०१ |
| ८ । | यशः शरीरं न विनश्यति । | २०१ |
| ९ । | यः परार्थमुपसर्पति स सत्पुरुषः । | २०२ |
| १० । | इन्द्रियाणां प्रशमनकारणं शास्त्रम् । | २०३ |
| ११ । | अकार्य्ये प्रवृत्तिं शास्त्राङ्कुशं निवारयति । | २०४ |
| १२ । | नीचस्य विद्या नोपेतव्या । | २०५ |
| १३ । | न म्लेच्छभाषणं शिक्षेत । | २०६ |

| सूत्राणि, | चतुर्थाध्याये | पृष्ठे |
|---|---|---|
| १४। स्वेच्छानामपि सद्वृत्तं ग्राह्यम्। | ... | २०७ |
| १५। शत्रोरपि सद्गुणो ग्राह्यः। | ... | २०८ |
| १६। विषादप्यमृतं ग्राह्यम्। | ... | २०९ |
| १७। गुणे न मत्सरः कर्त्तव्यः। | ... | २१० |
| १८। अवस्थया पुरुषः सम्मान्यते। | ... | २११ |
| १९। स्थाने एव नराः पूज्यन्ते। | . | २११ |
| २०। आर्य्यं वृत्तमनुतिष्ठेत्। | ... | २१२ |
| २१। न कदापि मर्य्यादामतिक्रमेत्। | ... | २१३ |
| २२। नार्घ्यर्धः पुरुषरत्नस्य। | .. | २१४ |
| २३। न स्त्रीरत्नसमं रत्नम्। | .. | २१४ |
| २४। दुर्लभं रत्नम्। | ... | २१५ |
| २५। अयशो भयं भयेषु। | ... | २१६ |
| २६। नास्त्यलसस्य शास्त्राधिगमः। | ... | २१७ |
| २७। न स्त्रैणस्य स्वर्गाप्तिर्धर्मकृत्यञ्च। | ... | २१७ |
| २८। स्त्रियोऽपि स्त्रैणमवमन्यन्ते। | ... | २१८ |
| २९। पुष्पार्थिनः सिञ्चन्ति अद्भिः पुष्पतरुम्। | ... | २१९ |
| ३०। अद्रव्य-प्रयत्नो वालुका पीड़नादनन्यः। | ... | २१९ |
| ३१। न महाजन-हासः कर्त्तव्यः। | .. | २२० |
| ३२। न नर्म्म-परीहासः कर्त्तव्यः। | ... | २२१ |
| ३३। कार्य्यसम्पदं निमित्तानि सूचयन्ति। | ... | २२१ |
| ३४। नक्षत्रादि-निमित्तानि विशेषयन्ति। | ... | २२२ |
| ३५। न त्वरितस्य नक्षत्र-परीक्षा। | ... | २२३ |
| ३६। परिचये दोषा न छाद्यन्ते। | ... | २२४ |

| | सूत्राणि, | चतुर्थाध्याये | पृष्ठे |
|---|---|---|---|
| ३७। | स्वयमशुद्धः परानाशङ्कते। | ... | २२४ |
| ३८। | स्वभावो दुरतिक्रमः। | ... | २२५ |
| ३९। | अपराधानुरूपो दण्डः। | ... | २२६ |
| ४०। | कथानुरूपं प्रतिवचनम्। | ... | २२७ |
| ४१। | विभवानुरूपमाभरणम्। | ... | २२७ |
| ४२। | कुलानुरूपं वृत्तम्। | ... | २२८ |
| ४३। | कार्य्यानुरूपः प्रयत्नः। | ... | २२९ |
| [illegible]। | पात्रानुरूपं दानम्। | ... | २२९ |
| ४५। | वयोऽनुरूपो वेषः। | ... | २३० |
| ४६। | स्वाम्यनुकूलो भृत्यः। | ... | २३१ |
| ४७। | भर्तृवशवर्त्तिनी भार्य्या। | ... | २३२ |
| ४८। | गुरुवशानुवर्त्ती शिष्यः। | ... | २३३ |
| ४९। | पितृवशानुवर्त्ती पुत्रः। | ... | २३४ |
| ५०। | स्वामिनि कुपिते स्वामिनमेवानुवर्त्तेत। | ... | २३४ |
| ५१। | मातृताडितो वत्सो मातरमेवानुरोदिति। | ... | २३५ |
| ५२। | स्नेहवतः स्वल्पोऽपि रोषः। | ... | २३६ |
| ५३। | आत्मच्छिद्रं न पश्यति परच्छिद्रमेव बालिशः। | ... | २३६ |
| ५४। | सोपचारः कैतवः। | ... | २३७ |
| ५५। | काम्यैर्विशेषैरुपचरणमुपचारः। | ... | २३८ |
| ५६। | अत्युपचारः शङ्कितव्यः। | ... | २३८ |
| ५७। | चिरपरिचितानां त्यागो दुष्करः। | ... | २३९ |
| ५८। | श्वः सहस्रादद्य काकिनी श्रेयसी। | ... | २३९ |
| ५९। | श्वो मयूरादद्य कपोतो वरः। | ... | २४० |

| | सूत्राणि, | चतुर्थाध्याये | पृष्ठे |
|---|---|---|---|
| ६०। | अतिसङ्गो दोषमुत्पादयति। | ... | २४१ |
| ६१। | सर्व्वं जयति अक्रोधः। | ... | २४२ |
| ६२। | मतिमुत्तिष्ठन् जयति। | ... | २४३ |
| ६३। | यद्यपकारिणि कोपः कोपे कोप एव कर्त्तव्यः। | | २४२ |
| ६४। | मतिमत्सु मूर्खमित्रगुरुवल्लभेषु विवादो न कर्त्तव्यः। | | २४४ |
| ६५। | नास्त्यपिशाचमैश्वर्य्यम्। | ... | २४४ |
| ६६। | नास्ति धनवतां कर्म्मसु श्रमः। | ... | २४५ |
| ६७। | नास्ति यानवतां गतिश्रमः। | ... | २४६ |
| ६८। | यस्मिन् कर्म्मणि यः कुशलः स तस्मिन्नियोक्तव्यः। | | २४७ |
| ६९। | अलोहमयं निगडं कलत्रम्। | ... | २४७ |
| ७०। | दुष्कलत्रं मनस्विनां शरीरकर्षणम्। | ... | २४८ |
| ७१। | अप्रमत्तो दारान् निरीक्षेत। | ... | २४९ |
| ७२। | स्त्रीषु किञ्चिदपि न विश्वसेत्। | ... | २५० |
| ७३। | न समाधिः स्त्रीषु लोकज्ञता च। | ... | २५१ |
| ७४। | गुरूणां माता गरीयसी। | ... | २५२ |
| ७५। | सर्व्वावस्थासु माता भर्त्तव्या। | ... | २५२ |
| ७६। | वैदुष्यमलङ्कारेण च्छाद्यते। | ... | २५३ |
| ७७। | स्त्रीणां भूषणं लज्जा। | ... | २५४ |
| ७८। | विप्राणां भूषणं वेदः। | ... | २५४ |
| ७९। | सर्व्वेषां भूषणं धर्म्मः। | ... | २५५ |
| ८०। | भूषणानामतिभूषणं विनयो विद्या च। | ... | २५६ |
| ८१। | अनुपद्रवं देशमावसेत्। | ... | २५७ |
| ८२। | साधुजन-बहुलो देशः। | ... | २५८ |

| सूत्राणि, | चतुर्थाध्याये | पृष्ठे |
|---|---|---|
| ८३। राज्ञो भेतव्य सर्व्वकालम्। | | २५९ |
| ८४। न राज्ञ पर दैवतम्। | | २६० |
| ८५। सुदूरमपि दहति राजाग्नि। | | २६१ |
| ८६। रिक्तहस्तो न राजानमभिगच्छेत्। | | २६२ |
| ८७। गुरुञ्च दैवञ्च। | | २६२ |
| ८८। कुटुम्बिनो भेतव्यम्। | | २६३ |
| ८९। गन्तव्यञ्च सदा राजकुलम्। | | २६३ |
| ९०। राजपुरुषै सह सम्बन्ध कुर्यात्। | | २६४ |
| ९१। राजदासी न सेवितव्या। | | २६५ |
| ९२। न चक्षुषापि राजान निरीक्षेत। | | २६५ |
| ९३। जनपदार्थे ग्रामस्त्यज्यते। | | २६६ |
| ९४। पुत्रे गुणवति कुटुम्बिन स्वर्ग। | | २६७ |
| ९५। कुटुम्बार्थे पुत्रस्त्यज्यते। | | २६८ |
| ९६। आत्मार्थे सर्व्वं त्यजेत। | | २६८ |
| ९७। ग्रामार्थे कुटुम्बस्त्यज्यते। | | २६९ |
| ९८। अतिलाभ पुत्रलाभ। | | २६९ |
| ९९। प्रायेण हि पुत्रा पितरमनुवर्त्तन्ते। | | २७० |
| १००। पुत्रा विद्यानां पार गमयितव्या। | | २७१ |
| १०१। दुर्गते पितरौ रक्षति स पुत्र। | | २७२ |
| १०२। कुल प्रख्यापयति पुत्र। | | २७३ |
| १०३। येन तत्कुलं प्रख्यात स पुरुष। | | २७४ |
| १०४। नानपत्यस्य स्वर्ग। | | २७५ |
| १०५। या प्रसूते भार्या। | | २७५ |

| सूत्राणि, | चतुर्थाध्याये, | पृष्ठे |
|---|---|---|
| १०६। तीर्थसमवाये पुत्रवतीमनुगच्छेत्। | ... | २७६ |
| १०७। सतीर्थाभिगमनाद् ब्रह्मचर्यं नश्यति। | ... | २७७ |
| १०८। न परक्षेत्रे बीजं विनिक्षिपेत्। | ... | २७८ |

---

## पञ्चमाध्याये—

| सूत्राणि | | पृष्ठे |
|---|---|---|
| १। पुत्रार्था हि स्त्रियः। | ... | २८० |
| २। स्वदासीपरिग्रहो हि स्वदासभावः। | ... | २८१ |
| ३। उपस्थित-विनाशः पथ्य-वाक्यं न शृणोति। | ... | २८१ |
| ४। नास्ति देहिनां सुखदुःखाभावः। | ... | २८२ |
| ५ मातरमिव वत्साः सुखदुःखानि कर्त्तारमेवानुगच्छन्ति। | | २८३ |
| ६। तिलमात्रमप्युपकारं शैलमात्रमिव मन्यन्ते साधवः। | | २८४ |
| ७। उपकारोऽनार्य्येष्वकर्त्तव्यः। | ... | २८५ |
| ८। प्रत्युपकारभयादनार्य्यः शत्रुर्भवति। | ... | २८५ |
| ९। स्वल्पमप्युपकारकृते प्रत्युपकारं कर्त्तुमार्य्यो न स्वपिति। | | २८६ |
| १०। न कदापि देवता अवमन्तव्या। | ... | २८७ |
| ११। न चक्षुः समं ज्योतिरस्ति। | ... | २८७ |
| १२। चक्षुर्हि शरीरिणां नेता। | ... | २८८ |
| १३। अपचक्षुः किं शरीरेण। | ... | २८९ |
| १४। नाप्सु मूत्रं कुर्य्यात्। | ... | २८९ |
| १५। न नग्नः प्रविशेज्जलम्। | ... | २९० |
| १६। यथा शरीरं तथा ज्ञानम्। | ... | २९१ |
| १७। यथा बुद्धिस्तथा विभवः। | ... | २९१ |

| सूत्राणि | पञ्चमाध्याये | पृष्ठे |
|---|---|---|
| १८। अग्नावग्निं न निक्षिपेत्। | | २९२ |
| १९। परदारान् मनसापि न गच्छेत्। | | २९३ |
| २०। तपस्विनः पूजनीयाः। | | २९३ |
| २१। अन्नदानं भ्रूणहत्यामपि मार्ष्टि। | | २९४ |
| २२। न वेदबाह्यो धर्मः। | | २९५ |
| २३। न कदाचिदपि धर्मं निषेधयेत्। | | २९६ |
| २४। स्वर्गं नयति सूनृतम्। | | २९७ |
| २५। नास्ति सत्यात् परन्तपः। | | २९८ |
| २६। सत्यं स्वर्गस्य साधनम्। | | २९९ |
| २७। सत्येन धार्यते लोकः। | | २९९ |
| २८। सत्याद्देवो वर्षति। | | ३०० |
| २९। नानृतात् परं पापम्। | | ३०१ |
| ३०। न मीमांस्या गुरवः। | | ३०२ |
| ३१। खलत्वं नोपेयात्। | | ३०२ |
| ३२। नास्ति खलस्य मित्रम्। | | ३०३ |
| ३३। लोकयात्रा दरिद्रं बाधते। | | ३०४ |
| ३४। अतिशूरो दानशूरः। | | ३०४ |
| ३५। भूषणं गुरुदेवब्राह्मणेषु भक्तिः। | | ३०५ |
| ३६। सर्व्वस्य भूषणं विनयः। | | ३०५ |
| ३७। आचारवान् विनीतोऽकुलीनोऽपि आर्य्यः। | | ३०६ |
| ३८। आचारादायुर्वर्द्धते कीर्त्तिश्च। | | ३०७ |
| ३९। प्रियमप्यहितं न वक्तव्यम्। | | ३०७ |
| ४०। बहुजनविरुद्धमेकं नानुवर्त्तेत। | | ३०८ |

| | सूत्राणि, | पञ्चमाध्याये | पृष्ठे |
|---|---|---|---|
| ४१। | न दुर्जनेन भागधेयं कर्त्तव्यम्। | ... | ३०८ |
| ४२। | न कृतार्थेषु नीचेषु सम्बन्धः। | ... | ३०९ |
| ४३। | ऋणाग्नि शत्रु-व्याधिष्वशेषः। | ... | ३०९ |
| ४४। | भृत्यनुवर्त्तनं पुरुषस्य रसायनम्। | ... | ३१० |
| ४५। | नार्थिषु अवज्ञा कार्य्या। | ... | ३११ |
| ४६। | सुदुष्करं कर्म कारयित्वा कर्त्तारं नावमन्येत। | | ३१२ |
| ४७। | न कृतघ्नस्य नरकान्निवर्त्तनम्। | .. | ३१२ |
| ४८। | जिह्वायत्तौ वृद्धिविनाशौ। | ... | ३१३ |
| ४९। | विषामृतयोराकरो जिह्वा। | ... | ३१४ |
| ५०। | प्रियवादिनो न शत्रुः। | . | ३१४ |
| ५१। | स्तुता देवा अपि चिरन्तुष्यन्ति। | ... | ३१५ |
| ५२। | अनृतादपि दुर्वचश्चिरन्तिष्ठति। | ... | ३१५ |
| ५३। | राजद्विष्टं न च वक्तव्यम्। | ... | ३१६ |
| ५४। | श्रुतिसुखाः कोकिलालापाः। | ... | ३१७ |
| ५५। | तस्यैव दुष्करकारो यशवान् नाम। | ... | ३१७ |
| ५६। | स्वधर्महेतुः सत्पुरुषः। | . | ३१८ |
| ५७। | नास्ति अर्थिनो गौरवम्। | .. | ३१८ |
| ५८। | स्त्रीणां भूषणं सौभाग्यम्। | . | ३१९ |
| ५९। | शत्रोरपि न पतनीया वृत्तिः। | .. | ३२० |
| ६०। | अप्रयत्नोदकं क्षेत्रम्। | . | ३२१ |
| ६१। | एरण्डमवलम्ब्य कुञ्जरं न कोपयेत्। | . | ३२१ |
| ६२। | अतिप्रवृद्धा शाल्मलिर्न वारणस्तम्भः। | | ३२२ |
| ६३। | अतिदीर्घोऽपि कर्णिकारो न मुसली। | ... | ३२३ |

| सूत्राणि, | पञ्चमाध्याये, | पृष्ठे |
|---|---|---|
| ६४। अस्ति दोषोऽपि खद्योतो न पावकः । | | २२३ |
| ६५। न प्रवृद्धस्य गुणहेतु । | | २२४ |
| ६६। सुक्षेत्रोर्थ्योऽपि पिचुमर्दो न शर्करायते। | | २२५ |
| ६७। यथा बीजं तथा निष्पत्ति । | | २२५ |
| ६८। यथा श्रुतं तथा बुद्धि । | | २२६ |
| ६९। यथा कुलं तथाचार । | | २२७ |
| ७०। संस्कृतोऽपि पिचुमर्दो न सहकार । | | २२७ |
| ७१। न चागतं सुखं परित्यजेत्। | | २२८ |
| ७२। स्वयमेव दु खमधिगच्छति रात्रिचर्य्यात्। | | २२८ |
| ७३। न रात्रि चारणं कुर्य्यात्। | | २२९ |
| ७४। न चार्द्धरात्रं स्वप्यात्। | | २३० |
| ७५। तद् विद्वद्भि परीक्षेत। | | २३० |
| ७६। परगृहमकारणतो न प्रविशेत्। | | २३१ |
| ७७। ज्ञात्वापि दोषमेव करोति लोक । | | २३१ |
| ७८। शास्त्रप्रधाना लोकवृत्ति । | | २३२ |
| ७९। शास्त्राभावे शिष्टाचारमनुगच्छेत् | | २३२ |
| ८०। नाचरिताच्छास्त्रं गरीय । | | २३३ |
| ८१। दूरस्थमपि चारचक्षु पश्यति राजा। | | २३४ |
| ८२। गतानुगतिको लोक । | | २३५ |
| ८३। जोविभिस्तमिवाजीवेत्। | | २ ५ |
| ८४। यमनुजीव्यं नापवदेत्। | | २३६ |
| ८५। तप सार इन्द्रियनिग्रह । | | २३७ |
| ८६। दुर्लभ स्त्रीबन्धनान्मोक्ष । | | २३७ |

| सूत्राणि, | पञ्चमाध्याये, | पृष्ठे |
|---|---|---|
| ८७। स्त्री नाम सर्व्वाशुभानां क्षेत्रम्। | ... | ३३८ |
| ८८। न च स्त्रीणां पुरुषपरीक्षा। | ... | ३३८ |
| ८९। स्त्रीणां हि मनः क्षणिकमेकत्र स्थिर्व्वातिष्ठति। | ... | ३३९ |
| ९०। अशुभद्वेषिणः स्त्रीषु न प्रसक्ताः। | ... | ३३९ |
| ९१। यज्ञफलज्ञास्त्रिवेदविदः। | ... | ३४० |
| ९२। स्वर्गस्थानं न शाश्वतम्। | ... | ३४१ |
| ९३। यावत् पुण्यफलं तावदेव स्वर्गफलम्। | ... | ३४२ |
| ९४। न च स्वर्गपतनात्परं दुःखम्। | .. | ३४२ |
| ९५। देही देहन्त्यक्त्वा ऐन्द्रपदं न वाञ्छति। | .. | ३४३ |
| ९६। दुःखानामौषधं निर्व्वाणम्। | .. | ३४४ |
| ९७। अनार्य्यसम्बन्धाद्वरम् आर्य्यशत्रुता। | ... | ३४४ |
| ९८। निहन्ति दुर्व्वचनं कुलम्। | ... | ३४५ |
| ९९। न पुत्रसंस्पर्शात्परं सुखम्। | .. | ३४५ |
| १००। विवादे धर्म्ममनुस्मरेत्। | .. | ३४६ |
| १०१। निशान्ते कार्य्यं चिन्तयेत्। | ... | ३४६ |
| १०२। प्रदोषे न संयोगः कर्त्तव्यः। | .. | ३४७ |
| १०३। उपस्थित विनाशो दुर्नयं मन्यते। | ... | ३४८ |
| १०४। क्षीरार्थिनः किं करिण्या। | ... | ३३८ |
| १०५। न दानसमं वश्यम्। | ... | ३४९ |
| १०६। परायत्तेषूत्कण्ठां न कुर्य्यात्। | ... | ३५० |
| १०७। असत्समृद्धिरसद्भिरेव भुज्यते। | ... | ३५१ |
| १०८। निम्बफलं काकैर्भुज्यते। | ... | ३५१ |
| १०९। नाम्भोधिस्तृष्णामपोहति। | ... | ३५२ |

| सूत्राणि, | पञ्चमाध्याये, | पृष्ठे |
|---|---|---|
| ११०। वालुका अपि स्वगुणमाश्रयन्ते । | | ३५२ |
| १११। सन्तोऽसत्सु न रमन्ते । | | ३५३ |
| ११२। न हंसा प्रेतवने रमन्ते । | | ३५४ |
| ११३। अर्थार्थं प्रवर्तते लोकः । | | ३५४ |


## षष्ठाध्यायः ।


| | |
|---|---|
| १। मायया बध्यते लोकः । | ३५६ |
| २। न मायापरे श्रेयो वसु तिष्ठति । | ३५६ |
| ३। नास्त्यामापरे धैर्यम् । | ३५७ |
| ४। दैन्यामरणमुत्तमम् । | ३५७ |
| ५। मायापरो निःसत्वो भवति । | ३५८ |
| ६। न मायया सह वासः कर्त्तव्यः । | ३५८ |
| ७। मायया क्वापि स्रोतव्यः । | ३५९ |
| ८। न दिवा स्वप्नं कुर्यात् । | ३६० |
| ९। न चात्मवमपि पथ्यं येषामतिमिश्रवचनं श्रवोतोऽयम् । | ३६० |
| १०। स्त्रीणां भर्त्ता परं दैवतम् । | ३६१ |
| ११। तदनुवर्त्तनमुभयसौख्यम् । | ३६२ |
| १२। अतिथिमभ्यागतं पूजयेद् यथाविधि । | ३६४ |
| १३। नित्यं संविभागो स्यात् । | ३६२ |
| १४। नास्ति हव्यस्य व्याघातः । | ३६४ |
| १५। मृगतृष्णा जलवद्भाति । | ३६४ |
| १६। मलुर्भिन्नवत् प्रतिभाति । | ३६५ |

| सूत्राणि, | षष्ठाध्याये | पृष्ठे |
|---|---|---|
| ६३। सुदर्शना हि राजानः प्रजा रञ्जयन्ति। | ... | ३९४ |
| ६४। चौरं राजपुरुषेभ्यो वित्तं रक्षेत्। | ... | ३९५ |
| ६५। दुर्दर्शना हि राजानः प्रजा विनाशयन्ति। | ... | ३९६ |
| ६६। न्यायवर्त्तिनं राजानं मातरमिव मन्यन्ते प्रजाः। | | ३९६ |
| ६७। तादृशः स राजा इह सुखं ततः स्वर्गमाप्नोति। | | ३९७ |
| ६८। चौरांश्च कण्टकांश्च सततं नाशयेत्। | ... | ३९८ |
| ६९। स्वधर्मानुष्ठानादेव सुखमवाप्यते स्वर्गमवाप्नोति। | | ३९८ |
| ७०। अहिंसा लक्षणो धर्मः। | ... | ३९९ |
| ७१। स्वशरीरमिव परशरीरं मन्यते साधुः। | ... | ३९९ |
| ७२। सर्व्वत्र मान्यं संशयति वाक्छिद्रः। | ... | ४०० |
| ७३। मांसभक्षणमयुक्तं सर्व्वेषाम्। | ... | ४०१ |
| ७४। न संसार-भयं ज्ञानिनाम्। | ... | ४०२ |
| ७५। विज्ञान-दीपेन संसारभयं निवर्त्तते। | ... | ४०२ |
| ७६। सर्व्वमनित्यमध्रुवम्। | ... | ४०४ |
| ७७। सदेवे देहिन्यामतिनश्यते। | ... | ४०४ |
| ७८। क्रमिशकृन्मूत्रभाजनं शरीरं पुण्यपापजन्महेतुः। | | ४०५ |
| ७९। जन्ममरणादिषु दुःखमेव। | ... | ४०६ |
| ८०। तपसा स्वर्गमवाप्नोति। | ... | ४०६ |
| ८१। क्षमायुक्तस्य तपो वर्द्धते। | ... | ४०७ |
| ८२। तस्मात् सर्व्वेषां कार्य्यसिद्धिरिति। | ... | ४०८ |
| ८३। कर्म्मारम्भोपायः पुरुष द्रव्यसम्पत् देश-काल-विभागो विनीपात प्रतीकारः कार्य्यसिद्धिश्च। ... | | ४०९ |

विहितेषु तदन्येषु मनो वाक् काय-कर्मभिः। (*)
प्रवृत्तौ वा निवृत्तौ वा एकरूपत्वमार्जवम्॥ १॥

यथा नागाः स्यन्दनानाञ्च सङ्घाः,
मन्त्राः शुद्धा दैवतञ्चानुकूलम्।
एतान्याहुः साधनानि स्म राज्ञाम्,
तेभ्योऽपीयं बुद्धिरुत्कृष्यते मे॥ २॥

बुद्धिरेव जयत्येका पुंसः सर्वार्थसाधनी।
यद्बलादेव किं किं न चक्रे चाणक्य भूसुरः॥ ३॥

समाप्तिङ्गतानि चाणक्य-सूत्राणि।

---

(*) एते श्लोकाः कतिपयादर्शग्रन्थान्तरे अधिकाः सन्ति, उपादेयतया अत्र सन्निविष्टाः।